॥ ॐ नमः शिवाय ॥

# सिद्धान्तमुक्तावल्याः

## प्रत्यक्षानुमानखण्डविवृतिः

( प्रश्नोत्तरी )

दरभङ्गाजिलान्तर्गत—ठाढीग्रामनिवासि-

झोपनामक- 'हरिशङ्करशर्म'

विरचिता,

मुरादाबादनिवासि-

ऋ० कु० रामस्वरूपशर्मणा संशोधिता

सनातनधर्मयन्त्रालये मुद्रिता



सन् १९२५ ई०

द्वितीयसंस्करणम् मूल्यम् ॥)

* श्रीहरिः शरणम् *

# प्रश्नावली मुक्तावल्या अङ्कानुसारेण बोध्या

१—मंगलं समाप्तिसाधनमुत विघ्नध्वंसजनकमित्युपपाद्य सिद्धान्तयत ( १ )

२—आकाशात्मनोः साधर्म्यमुपवर्ण्य (१६) जलत्वजातिसिद्धिप्रकारं सम्यग्वर्णय ( २४ )

३—अनुमितिलक्षणानि समन्वयमुक्त्वा ( ३८ ) वायुसत्तायाश्चाक्षुषं कुतो न ( ४४ )

४—इन्द्रियत्वं परिष्कृत्य समन्वयं प्रतिपादयत (४२)

५—सामान्यलक्षणप्रत्यासत्तेः स्वरूपमुपपाद्य (४६) अस्यां ज्ञानलक्षणभेदमुपपाद्यताम् ( ४७ )

६—घ्राणेन्द्रियस्य पार्थिवत्वसाधकानुमानप्रयोगमुपवर्ण्य हेतुकोटिप्रविष्टविशेषणानां प्रयोजनं सप्रपञ्चं प्रदर्श्य ( २३ ) सांख्यमतानुसारेणात्मस्वरूपं निरूप्य मुक्तावलीकारेण कया युक्त्या निराकृतं पूर्वोत्तरपक्षे हेतवः प्रदर्शनीयाः (३६)

७—सविकल्पकनिर्विकल्पकयोर्लक्षणे परिष्कृत्य लक्ष्ये संगनीये (४१) इन्द्रियसामान्यलक्षणं परिष्कृत्य लक्ष्येषु संगमय्य पदानां व्यावृत्तिः प्रदर्शनीया ( ४२ )

८–तमसोऽतिरिक्तद्रव्यत्वं कथमाशंक्य निराकृतम् (५)
९–वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलाविति कारिका व्याख्येया ( २५ )
१०–सुवर्णस्य तैजसत्वे का वाच्या युक्तिः ( २७ )
११–शब्दाधिकरणं नवमं गगनात्मकं द्रव्यङ्कथं सिद्धयति ( २९ )
१२–प्रत्यक्षलक्षणं सप्रपञ्चं निरूप्यताम् ( ३७ ) द्रव्यत्वजातौ प्रमाणन्तत्र कल्पान्तरानुसरण-प्रयोजनञ्च वक्तव्यम् ( ४ )
१३–सामान्यस्य किं लक्षणम्, तत्रत्यपदानां व्यावृत्तिश्च का(६) समवायसिद्धिप्रकारश्च कः (९)
१४–पारिमांडल्यभिन्नानामिति कारिका व्याख्येया (१३) अन्यथासिद्धिलक्षणञ्च वाच्यम् (१७)
१५–अलौकिकस्तु व्यापार इति संपूर्णकारिका व्याख्येया ( ४६ ) शक्तिसादृश्ययोरतिरिक्तत्वमुपपाद्य निराकुरुत ( ३ )
१६–द्रव्यादयः पञ्च भावा अनेके समवायिनः,इति कारिका व्याख्येया ( १२ ) तृतीयान्यथासिद्धिः सोदाहरणं प्रदर्श्यताम् ( १७ ) ( ३ )
१७–पाषाणस्य पृथिवीत्वं साधयत ( २० ) शरीरस्य कर्तृत्वं निराकुरुत ( ३२ )

१८–भूतत्वं किं तत्रत्यसर्वाणि पदकृत्यानि प्रदर्शनीयानि ( १७ ) ज्ञानलक्षणा–प्रत्यासत्तिः किमर्थं स्वीकृता ( ४८ ) किं चास्याः स्वरूपम्

१९–नव्यमते व्यतिरेकव्यभिचारोद्धारपूर्वकं मंगलप्रयोजनं निरूप्य (१) ईश्वरः साधनीयः (२)

२०–संसर्गाभावान्योन्याभावयोः प्रत्यक्षे कस्य कस्य योग्यता किंस्वरूपा च सा ( ४५ )

२१–सामान्यलक्षणप्रत्यासत्त्यनंगीकारे का वानुपपत्तिः ( ४४ ) चतुर्थान्यथासिद्धिं सोदाहरणं लिख ( १७ ) ( ४ )

२२–पृथिवीत्वजातौ प्रमाणमुपन्यस्य पाषाणे पृथिवीत्वं साधयत ( २० )

२३–सन्निकर्षषट्कं सोदाहरणमुपपाद्यताम् (४३) जलत्वजातिसिद्धिः कथम् ( २४ )

२४–कालोपाधिनिरूपणं कृत्वा ( ३० ) इन्द्रिये चैतन्यांगीकारे दूषणमुपपाद्यताम् ( ३३ )

२५–सामान्यलक्षणज्ञानलक्षणप्रत्यासत्त्योः स्वरूपं ( ४७ ) भेदश्च वाच्यम् ( ४८ )

२६–इन्द्रियत्वं कुतो न जातिः किं च तल्लक्षणं किं च तत्रोद्भूतत्वम् ( ४२ )

२७–प्रत्यक्षं सामान्यतो विशेषतश्च कतिविधम् (४२)

किं च तत्सामान्यलक्षणम् ( ३७ )

२८–सामान्यलक्षणास्वीकारे किं फलम् ( ४६ ) कश्च मनसश्चैतन्याभ्युपगमे दोषः ( ३३ )

२९–अभावाः कतिविधाः कानि च तेषां लक्षणानि (१०) तेषामधिकरणात्मकत्वं च कुतो न (११)

३०–भूतत्वं कुतो न जातिः ( ७ ) तच्च किं तत्स्वरूपपरिष्कारे का का शंका किं च समाधानम् ( १८ )

३१–शरीरत्वं किम्, तन्निरूपणे च कुत्राव्याप्तिः ? कथं च तन्निरासः, तस्य जातित्वांगीकारे किं बाधकम् ( २२ )

३२–क्षणिकविज्ञानात्मनिरासो विस्तरेणोपपादनीयः ( ३४ )

३३–सुवर्णस्य तैजसत्वबाधिका साधिका वा युक्तिः कीदृशी ( २७ )

३४–व्यक्तेरभेदस्तुल्यत्वमित्यादीनां षण्णां सोदाहरणानि लक्षणानि लिख ( ७ )

३५–अलौकिकप्रत्यक्षे सन्निकर्षाः के ( ४६ ) सामान्यलक्षणायाः प्रत्यासत्तित्वे प्रमेयत्वेन रूपेण निखिलप्रमेयज्ञानवतोऽस्मदादेः सर्वज्ञत्वापत्तिः कथं वार्यते ( ४७ ) ( ५ )

३६–विशेषस्य जातिबाधकत्वे किं प्रमाणम् ( ७ ) क्षित्यादीनां नवानामित्यादिकारिका व्याख्येया ( १८ )

३७–अवयविनि किम्मानमिति शंकासमाधाने विशद्य ( २१ ) आत्मनो नित्यविज्ञानरूपत्वे साधकं बाधकञ्च लिख ( ३५ )

३८–इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वमित्यादिग्रन्थस्य कोऽभिप्रायः ( १४ )

३९–क्षणिकविशेषगुणवत्त्वं कस्य सामर्थ्यम्, अस्य कीदृशो निष्कृष्टार्थस्तत्रत्यविशेषणानां च कानि प्रयोजनानि ( १६ )

४०–विशेषपदार्थस्वीकारे का वाचो युक्तिः ( ८ )

४१–अणुपरिमाणस्य कारणत्वस्वीकारे को दोषः ( १३ ) असमवायिकारणस्य सोदाहरणं दूषणभूषणसहितं सामान्यलक्षणं लिख( १६ )

४२–परमाणुसद्भावे का युक्तिः ( २१ ) तेजस्त्वजातिः कथं सिद्ध्यति ( २६ )

४३–घ्राणेन्द्रियस्य पार्थिवत्वे किम्मानम् ( २४ )

४४–अभावत्वलक्षणेऽन्योन्याश्रयः कथं वारणीयः १०

४५–वायोस्त्वगिन्द्रियेण प्रत्यक्षं स्वीकुर्वतां कोभिप्रायः (३६) कालसद्भावे च किम्मानम् (३०)

४६–त्वङ्मनोयोगस्य ज्ञानसामान्ये हेतुत्वे किं साधकम् ( ४० ) अभावप्रत्यक्षे योग्यानुपलब्धेः कारणत्वे का युक्तिर्योग्यता वा कीदृशी ( ४५ )

४७–ज्ञानप्रकारीभूतसामान्यस्य सामान्यलक्षणाप्रत्यासत्तित्वे को दोषः ( ४६ )

ॐ नमः शिवाय ।

# अथ मुक्तावल्याः

# प्रत्यक्षखण्डविवृतिः

गिरिजामुखकान्तस्य धूर्जटेः पादपंकजम् ।
मुक्तावल्याः सुविवृतिं नत्वा कुर्मः सतां मुदे ॥

ननु तत्सत्त्वे तत्सत्त्वन्तदभावे तदभाव इत्यन्वयव्यतिरेकलभ्यस्य कारणत्वस्य मंगलेऽसत्त्वेन तत्करणन्निष्फलम् । तथा हि कादम्बर्यादावास्तिकग्रन्थे सत्यपि मंगले समाप्तिविरहः, नास्तिकग्रन्थे असत्यपि मंगले समाप्तिसत्त्वमिति मंगलेऽन्वयव्यतिरेकाभावादिति चेन्न, मंगलं सफलम् अविगीत (अनिन्दित) शिष्टाचारविषयत्वात्, दर्शादियागवदित्यनुमानेन मंगलस्य सफलत्वासिद्धौ समाप्त्यतिरिक्तफलकल्पनस्य प्रकृतानुपयोगितया समाप्तिरूपफलकल्पनस्यैव युक्तत्वात् । मंगलसत्त्वे समाप्तिविरहस्थले च बलवत्तरविघ्नसत्तासत्त्वेन अल्पतरमंगलेन तन्निराकरणासम्भवस्य मंगलासत्त्वे समाप्तिसत्त्वस्थले विघ्नध्वंसकारणीभूतजन्मान्तरीयमंगलस्य च फलदर्शनात्कल्पनेन पूर्वोक्तव्यभिचारदोषानवकाशः । नन्वेवं विघ्न

विघाताय कृतम्मंगलमिति प्रतिज्ञाविरोध इति चेन्न, स्वजन्यत्वस्वजन्यजनकत्वोभयसम्बन्धेन स्वविशिष्टत्वरूपस्य मंगलद्वारत्वस्य विघ्नध्वंसे सत्त्वेनाविरोधात् तथा च—मंगलजन्यविघ्नध्वंसविशिष्टसमाप्तिं प्रति मंगलस्य कारणत्वमिति फलितम् । ननु भोगादिना अवश्यविघ्नध्वंसपूर्वकसमाप्तिसम्भवेन मंगलस्यान्यथासिद्धत्वमिति चेन्न, व्यापारेण व्यापारिणो नान्यथासिद्धिरिति सिद्धान्तेनादोषादिति प्राचीनमतसंक्षेपः ॥

ननु विघ्नो निवर्त्यतामिति कामनयैव मंगलाचरणे प्रवृत्तिदर्शनान्मंगलस्य समाप्तिं प्रति कारणत्वं निर्युक्तिकमित्याशयेन नवीनमतमुपपादयति नव्यास्त्वित्यादिना । अयम्भावः बुद्धिप्रतिभादिकारणम्बिना मंगलमात्रेण समाप्तेरसम्भवात्समाप्तिं प्रति उपदर्शितकारणकलापस्यैव कारणत्वम् । स्वतःसिद्धविघ्नात्यन्ताभाववता पुरुषेण कृतस्य मंगलस्य निष्फलत्वन्तु पापभ्रमेण कृतस्य प्रायश्चित्तस्य सर्वमते निष्फलत्वमिव समानम् । तत्तद्बोधकवेदाप्रामाण्यन्तु न, सति विघ्नादौ मंगलादि कारणमित्यस्यैव वेदबोधितत्वात् । ननु "सर्वे विघ्नाः शमं यान्ति गणेशस्तवपाठतः" इति स्मृतिबोधितमंगलातिरिक्तेऽपि विघ्ननाशकत्वमिति कथं मंगलस्यैव तन्नाशकत्व-

मिति चेन्न, मंगलाऽव्यवहितोत्तरजायमानविघ्नध्वंस-विशेषं प्रति मंगलस्य विनायकस्तवपाठाऽव्यवहितो-त्तरजायमानविघ्नध्वंसविशेषं प्रति विनायकस्तवपाठा-देश्च कारणत्वमिति कल्पनेनादोषात् । न चैवं समाप्ति-कामनावतो जनस्य मंगले प्रवृत्तिर्न स्यात्, अतः समाप्तिं प्रत्यपि मंगलस्य कारणत्वमंगीकार्यम् । तथा च मंगलाभावविशिष्टे नास्तिकग्रन्थे व्यभिचारो दुर्वार इति चेन्न, प्रतिबन्धकसंसर्गाभावस्यैव कार्य-जनकत्वेन दृष्टतया क्वचिद्विघ्नात्यन्ताभावस्यापि समाप्तिं प्रति कारणत्वांगीकारेण नास्तिकग्रन्थे व्यभिचारानवकाशादिति दिक् ( १ )

ननु प्रत्यक्षप्रमाणागोचरीभूतेश्वरसत्त्वे किम्मान-मिति चेच्छृणु क्षित्यंकुरं सकर्तृकं कार्यत्वात् घटव-दित्यनुमानेनानादिकालीनक्षित्यंकुरकर्तृत्वमस्मदा-दीनामसम्भवेन अनादिकालीनः कश्चित्कर्त्ताऽस्तीति सिद्धौ तादृशो यः स एवेश्वर इति सिद्धम् । न च क्षित्यंकुरं कर्त्रजन्यं शरीराजन्यत्वादाकाशवदित्यनु-मानेन प्रकृतसाध्यविरोधिसाध्यसाधकहेतुमत्पक्षत्व-रूपसत्प्रतिपक्षदोषस्य तत्रेश्वरसिद्धिसाधकानुमाने सत्त्वेन कथमनुमानेनेश्वरसिद्धिरिति नास्तिकमतं युक्तमिति वाच्यम् । उक्तनास्तिकानुमानस्य क्षित्यं-कुरं कर्त्रजन्यं न वेति व्यभिचारशंकानिवर्त्तका-

नुकूलतर्करहितत्वेनाप्रयोजकत्वात् । मम तु कार्यत्वावच्छिन्नं प्रतिकर्तृत्वेन कारणत्वरूपस्य कार्यकारणभावस्य सकललोकदृष्टतया क्षित्यंकुरं कर्तृजन्यन्न वेति व्यभिचारशंकानिवर्तकानुकूलतर्कस्योक्तकार्यकारणभावस्य सत्वेनाप्रयोजकत्वशंकानवकाशः । ननु कार्यत्वस्य कर्तृजन्यत्वरूपतया साध्यसमत्वात् पर्वतो वन्हिमान्वान्हिमत्वादितिवत्प्रकृतानुमानोऽप्रयोजक इतीश्वरसाधिकां श्रुतिं दर्शयति द्यावाभूमीत्यादिनेति दिक् ॥ २ ॥ छ

ननु मणिमन्त्रौषधिरूपप्रतिबन्धकसमीपवर्तिना वह्निना दाहाजननेन मण्यादिना वह्निनिष्ठदाहानुकूलशक्तेर्नाशात् उत्तेजकसूर्यकान्तमणिसत्वे मण्याद्यपसारणे वा वह्निना दाहजननाच्च वह्नौ दाहानुकूलशक्तिरस्तीति कल्पनासिद्धायाः शक्तेः षट्पदार्थेष्वनन्तर्भावात्कथं सप्तैवेति । एवं सादृश्यमपि पदार्थान्तरम्, न च तस्य षट्पदार्थेऽन्तर्भावसम्भवः यथा गोत्वं नित्यन्तथाऽश्वत्वमपीति प्रतीत्या सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात् । यो यस्मिन्नन्तर्भवति स ततोऽन्यत्र न दृश्यते । अभावेऽपि नान्तर्भावः सत्त्वेन प्रतीयमानत्वादिति चेन्न, दाहकार्यम्प्रति उत्तेजकाभावविशिष्टमण्यभावस्य स्वातन्त्र्येण मण्यभावादेर्विशिष्टस्य वा वह्नेः कारणत्वक-

ल्पनेनैवोपपत्तौ अनन्तशक्तिनत्प्रागभावादेः कल्पने गौरवात् । एवन्तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वस्य सादृश्यस्य स्वीकारान्न तस्याप्यतिरिक्तत्वमिति दिक् ३

नन्वनेकव्यक्तिषु घटोऽयं घटोऽयमित्याद्येकाकार- प्रतीत्या घटत्वादिजातेः सिद्धत्वेऽपि इदं द्रव्यमिदं द्रव्यमित्येकाकारप्रतीतेर्द्रव्यत्वजातिसाधिकाया घृत- जतुप्रभृतिषु पामरस्य तादृशप्रतीतेरभावाद् व्यभिचा- रेण कथं द्रव्यत्वजातिसिद्धिरिति चेन्न, समवायसंब- न्धावच्छिन्नद्रव्यत्वावच्छिन्नकार्यतानिरूपितकार- णता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् घटनिष्ठ- कार्यतानिरूपितदंडनिष्ठकारणतावदित्यनुमानेन कार- णतावच्छेदकतया द्रव्यत्वजातिसिद्धेः । ननु कृति- जन्यत्वरूपकार्यत्वस्य गुरुधर्मतया कार्यतावच्छेदक- त्वे गौरवात् कालिकसम्बन्धेन घटत्वादेरपि तथात्वेन व्यभिचाराच्चेति कथन्तत्सिद्धिरिति चेन्न, समवाय- सम्बन्धावच्छिन्न-संयोगत्वावच्छिन्न-कार्यतानिरूपि- तकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात्, इत्य- नुमानेन उक्तकारणतावच्छेदकतया द्रव्यत्वसिद्धेः । ननु विभुद्वयसंयोगस्य नित्यतया कार्यत्वविरहात् संयोगत्वावच्छिन्नकार्यताव्यभिचारः । अन्यूनान- तिप्रसक्तधर्मस्यैवावच्छेदकत्वनियमादिति कथमनु-

मानेन तत्सिद्धिरिति चेन्न, समवायसम्बन्धावच्छिन्न-विभागत्वावच्छिन्न—कार्यतानिरूपितकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन कारणतावच्छेदकतया तत्सिद्धिरिति दिक् ॥ ४ ॥

ननु तमसश्चक्षुरिन्द्रियेण प्रत्यक्षत्वात् नीलं तमश्चलतीति प्रतीत्या तमसि रूपवत्त्वक्रियावत्त्वरूपस्य द्रव्यत्वलक्षणस्य च सत्वात्, गन्धादेर्गुणस्य तत्रासत्वेन आलोकनिरपेक्षचक्षुःकारणत्वस्य तत्प्रत्यक्षे सत्त्वेन च पृथिव्यादौ तदंतर्भावस्य वक्तुमशक्यत्वाच्च दशमं द्रव्यं तमः कुतो नोक्तमिति मीमांसकमतं युक्तमिति चेन्न तेजोऽभावरूपपदार्थस्यावश्याश्रयणीयतया तद्रूपस्य तमसोऽतिरिक्तपदार्थत्वकल्पनाया अनौचित्यात् । नीलन्तमश्चलतीति प्रतीतिस्तु भ्रमरूपैव । ननूत्तरकाले तमो न चलतीति बाधज्ञानाभावादुक्तप्रतीतेर्भ्रमरूपत्वं वक्तुमशक्यमिति कथन्न तमसोऽतिरिक्तत्वादिति चेन्न । तथा सति अनन्तावयवानां तदुत्पत्तिध्वंसादीनां च कल्पनेऽतिगौरवादिति संक्षेपः ॥ ५ ॥

सामान्यं द्विविधं प्रोक्तं परं चापरमेव चेति कारिकालक्षितसामान्यलक्षणन्तु नित्यत्वे सति अनेकसमवेतत्वम् । यथा ब्राह्मणत्वघटत्वादिकम्, एतद्धि नित्यं सदनेकव्यक्तिषु समवायेनवृत्तिजातिव्यक्त्योः समवायात् । संयोगादिगुणस्यानेकसमवेतत्वेऽपि

नित्यत्वाभावात्तत्र नातिव्याप्तिः । न चैवमपि विभुद्वयसंयोगस्य नित्यत्वेन तत्रातिव्याप्तिरिति वाच्यम् सिद्धान्ते विभुद्वयसंयोगस्यानंगीकारात्, गगनपरिमाणादीनां नित्यत्वसमवेतत्वयोः सत्त्वेपि अनेकवृत्तित्वाभावात् । अत्यन्ताभावे नित्यत्वानेकवृत्तित्वयोः सत्वेन समवायेनानेकवृत्तित्वाभावाच्च नातिव्याप्तिरिति दिक् ॥ ६ ॥

ननूक्तजातिलक्षणस्य घटत्वकलशत्वे सत्त्वेन आकाशत्वेऽसत्वेन च व्यभिचारादिति चेन्न "व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः रूपहानिरसंबंधो जातिबाधकसंग्रहः" इत्युक्तदिशा व्यभिचारवारणसंभवात् । तथा हि स्वाश्रयव्यक्तेरेकतया आकाशत्वे जातिलक्षणस्याघटनान्न तस्य जातित्वम् । घटत्वकलशत्वयोरुभयोः समव्यक्तिवृत्तित्वान्न जातित्वम् किन्त्वेकस्यैव । परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशरूपसंकरलक्षणस्य मूर्तत्वाभाववति मनसि मूर्तत्वस्य मूर्तत्वाभाववति गगने भूतत्वस्य च पृथिव्यादिचतुष्टये सत्वान्न तयोर्जातित्वम्, घटत्वादिनिखिलजातिष्वनुगतजातित्वस्य जातित्वांगीकारे तत्रापि जातित्वमभ्युपेयम्, तस्य निखिलजातिवृत्तित्वात्, तत्रापि पुनर्जातित्वे

जातित्वमित्येवं रीत्या आधाराधेयभावः कुत्रापि विश्रान्तिं न लभेत, एवञ्चाप्रामाणिकानन्तपदार्थकल्पनापत्त्यानवस्थापत्तेः। एवं विशेषे विशेषत्वांगीकारे स्वतो व्यावर्त्तकत्वरूपस्य निजरूपस्य हानिः स्यादतो विशेषत्वन्न जातिः। जातिप्रतियोगिकसमवायेतरसमवायस्यानंगीकारेण असम्बन्ध एव समवायस्य जातिमत्त्वे बाधकः। एवमभावस्यापीति दिक्॥ ७॥

"अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तित" इत्यनया लक्षितविशेषपदार्थास्वीकारे पृथिवीपरमाणुः जलादिपरमाणुतो भिन्नः विशेषादिति विशेषहेतुकानुमितेरभावापत्त्या परमाणुभेदकस्यान्यस्यासम्भवेन कार्यवैलक्षण्यानापत्तेः। अयञ्च स्वत एव व्यावृत्तरूपः न तु कोऽप्यस्य व्यावर्त्तक इति प्राचीनाः। नवीनास्तु यथैव विशेषाणां स्ववृत्तिधर्मम्बिना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपीति न स स्वीकार्य इत्यलं पल्लवितेन॥ ८॥

"घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः। तेषु जातेश्च संबन्धः समवायः प्रकीर्तित" इति कारिकालक्षितसमवायपदार्थस्य संबन्धतायां किम्मानमिति चेन्न, रूपविशिष्टः क्रियाविशिष्टो वेत्यादिविशिष्ट-

बुद्धिः विशेषणविशेष्ययोर्यत्किञ्चित्सम्बन्धावगाहिनी विशिष्टबुद्धित्वाद्दंडी पुरुष इति विशिष्टबुद्धिवदित्यनुमानेन संयोगादेः संबन्धस्य तादृशस्य बाधाल्लाघवादेकस्य समवायस्य तत्सिद्धेः । न च समवायस्यैकत्वे स्पर्शसमवायरूपसमवाययोरैक्यात्स्पर्शवान्वायुरितिवद् रूपवान्वायुरिति प्रतीत्यापत्तिः संबंधसत्तायाः संबन्धिसत्त्वानियामकत्वमिति नियमादिति वाच्यम् 'रूपनिरूपितत्वविशिष्टसमवायनिरूपिताधिकरणताया वायावनंगीकारेणोक्तप्रतीतेर्वक्तुमशक्यत्वात् । न चोक्तविशिष्टबुद्धिनियामकतया स्वरूपस्यैव संबन्धतामात्रकल्पनेन सिद्धौ समवायांगीकरणं निरर्थकमिति वाच्यम् । अनेकेषां स्वरूपाणां संबंधत्वकल्पनापेक्षया एकस्यैव समवायस्य तत् स्वीकारे लाघवात् ॥ १ ॥

न चैवमभावस्यापि वैशिष्ट्यं संबन्धान्तरं सिद्ध्येत् । तथा च स्वरूपसम्बन्धस्य विलयापत्तिरिति वाच्यम्, वैशिष्ट्यस्य नित्यत्वे घटानयनानन्तरमपि घटाभावतत्संबन्धयोश्च नित्यत्वेन भूतले घटाभावबुद्धिप्रसंगात् । घटाभावस्यानित्यत्वे घटशून्यदेशेऽपि तदभावप्रतीतिर्न स्यात्, नित्यस्य वैशिष्ट्यस्य सत्वात् । न च सिद्धान्तेऽपि पाकेन रक्ते घटे श्यामरूपसम-

वायस्य सत्त्वेन श्यामरूपवत्ताप्रतीतिप्रसंग इति वाच्यम्, श्यामरूपसमवायसत्त्वेऽपि पाकेन श्यामरूपस्यैव नष्टतया तत्प्रतीतेरसंभवत्वात् वैशिष्ट्यस्यानित्यत्वे तु अनन्ततत्कल्पनायां गौरवस्य दुर्वारत्वात् । न च वैशिष्ट्यानंगीकारे घटाभावभूतलयोः स्वरूपसंबन्धस्यैव स्वीकारे च घटानयनानन्तरमपि घटाभावभूतलयोः तत् स्वरूपसंबन्धस्य च सत्त्वेन तव मतेऽपि घटाभावबुद्धिप्रसंग इति वाच्यम् तत्तदभावाधिकरणकालविशिष्टभूतलादेरेव संबन्धतया स्वीकारेणादोषादिति दिक् ॥ ६ ॥

ननु द्रव्यादिषट्कान्योन्याभाववत्त्वरूपाभावत्वलक्षणेऽन्योन्याश्रयान्नेदं युक्तमिति चेन्न, अखंडोपाधेरनियोगिताविशेषस्य वाऽभावत्वस्य प्राचीनमतसिद्धत्वेनान्योन्याश्रयानवकाशात् । नवीनास्तु समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपस्य भावभिन्नत्वस्याभावत्वलक्षणस्य सर्वमतसिद्धत्वमिति वदन्ति । अनयोर्विशदविचारस्तु विस्तरभयान्नेह प्रपंचितः ॥ १ ॥

अभावो द्विविधः संसर्गाभावान्योन्याभावभेदात् । संसर्गाभावत्वं च अन्योन्याभावभिन्नाभावत्वम् । अन्योन्याभावत्वं च तादात्म्यसम्बन्धावच्छिन्नप्रति-

योगिताकाभावत्वम्,यथा घटः पटो न । संसर्गाभाव-स्त्रिविधः,प्रागभावध्वंसात्यन्ताभावभेदात्। तत्र विना-श्यभावत्वं प्रागभावत्वं, यथाऽत्र घटो भविष्यति । जन्याभावत्वं ध्वंसत्वम्, यथा घटो नश्यति नित्यसं-सर्गाभावत्वमत्यन्ताभावत्वम्, यथा इदानीं भूतले घटो नास्ति, केचित्तु यत्र भूतले घटादिकमपसारितं पुनरानीतश्च तत्र घटाभावकालिकभूतलरूपसम्बन्ध-स्यासत्वेन अत्यन्ताभावस्य नित्यत्वेऽपि न घटात्य-न्ताभावबुद्धिः, किंतु तत्र उत्पादविनाशशाली साम-यिकाभावश्चतुर्थ इत्याहुः । प्राचीनमते ध्वंसाद्यधि-करणे विरोधान्नात्यन्ताभावः, श्यामघटे रक्तो ना-स्तीत्यादिप्रतीतिः प्रागभावं ध्वंसं वाऽवगाहते नात्यन्ताभावमिति, नवीनमते कालस्य संबन्धघट-कत्वेन ध्वंसादिकाले विरोधाभावादत्यन्ताभावो वर्तत एवेति दिक् ॥ १० ॥

ननु भूतले घटाभाव इति वाक्येन भूतलरूपस्यैव प्रतीत्याऽभावानामधिकरणरूपतयैवोपपत्तौ अभावस्य सप्तमपदार्थत्वकल्पनं गौरवमेवेति चेन्न,कतिपयाधि-करणात्मकत्वकल्पनापेक्षया एकस्यैवाभावस्य तत्-कल्पने लाघवात्। किंच अभेदस्थले आधाराधेयभाव-स्यादृष्टतया भूतले घटाभाव इत्यनुपपत्तिः।ननु घटाभावे पटाभाव इत्यभावाधिकरणकाभावस्याधिकरणात्म-

कत्वेपि तत्राधाराधेयभावस्य सर्वमतसिद्धतयाऽत्रापि तथैवास्त्विति चेन्न, येनेन्द्रियेण यद्वस्तु गृह्यते तेनैव तद्वृत्तयो जातिरूपाभावा गृह्यन्त इति सिद्धान्ताद्रूपादेर्ग्राहकस्येन्द्रियस्य अभावानामधिकरणात्मकत्वमते श्रोत्रे शब्दाभाव इत्यभावस्य श्रोत्ररूपतया स्वेन स्वग्रहणासम्भवेन रूपाद्यभावग्राहकत्वानुपपत्तेः, एवं ज्ञानविशेषरूपत्वं कालविशेषरूपत्वं वाऽत्यन्ताभावस्येति मतमपि उक्तदोषदुष्टतयाऽनादेयमिति दिक् ॥ ११ ॥

द्रव्यादिपञ्चकानां अनेकत्वे सति समवायित्वं साधर्म्यम्, न चैवमभावस्यापि तथात्वेन तत्रातिव्याप्तिरिति वाच्यम्, भावत्वे सतीति निवेशेनादोषात् । न च प्रत्येकं घटादावाकाशादौ चानेकत्वाभावेन तत्राव्याप्तिरिति वाच्यम्, अनेकमात्रवृत्तिपदार्थविभाजकोपाधिमत्त्वमित्यर्थवर्णनेनादोषात, पदार्थविभाजकद्रव्यत्वरूपोपाधिमादाय लक्षणसमन्वयात् । समवायित्वमित्यस्य समवायप्रतियोगिकत्वमर्थः । न तु समवायानुयोगिकत्वम्, सामान्यादौ व्यभिचारात् । नहि सामान्यविशेषौ समवायानुयोगिनौ ॥ द्रव्यगुणकर्मणां सत्तावत्वं गुणानां निर्गुणत्वं गुणे गुणानंगीकारात कर्मणां निष्क्रियत्वञ्च साधर्म्यम् । ननु द्रव्यं क्षणमगुणमक्रियञ्च तिष्ठतीति नैयायिकसिद्धान्तेन निर्गुणत्वनि-

ष्क्रियत्वयोरुत्पत्तिक्षणे घटादावतिव्याप्तिः,क्रियाशून्यत्वं चाकाशेऽतिव्याप्तमिति वाच्यम्, गुणवदवृत्तिधर्मवत्त्वं कर्मवदवृत्तिपदार्थविभाजकोपाधिमत्त्वमित्यर्थवर्णनेनादोषात् । गुणवति घटे द्रव्ये वा अवृत्तिधर्मस्य गुणत्वस्य गुण एव विद्यमानत्वेन कर्मवति घटे द्रव्ये वा अवृत्तिधर्मस्य कर्मत्वस्य कर्मण्येव विद्यमानत्वेन आकाशत्वादेः पदार्थविभाजकोपाधित्वाभावेन च नोक्तदोष इति कारिकाशयः ॥ १२ ॥

"पारिमांडल्यभिन्नानां कारणत्वमुदाहृतमिति" कारिकायां पारिमांडल्यमणुपरिमाणम्, तद्भिन्नानां कारणत्वसाधर्म्यम् । कारणत्वं च अन्यथासिद्धशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वम् । एतच्चाणुपरिमाणे न संभवति, परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वमिति नियमात् । साजात्यमत्र अणुत्वमहत्त्वदीर्घत्वह्रस्वत्वरूपपरिमाणविभाजकोपाधिना । तथा च यथा कपालपरिमाणं स्वस्मादुत्कृष्टस्य घटपरिमाणस्य जनकं, एवमणुपरिमाणमपि स्वस्मादुत्कृष्टस्य जनकं भवेत्,तच्च न संभवति अणुतरपदार्थाप्रसिद्धेः द्व्यणुकादिपरिमाणस्य जनकन्तु संख्यैवेति तत्त्वम् ॥ १३ ॥

एवमुक्तयुक्त्या आत्मावृत्तिपरममहत्परिमाणस्य

अतीन्द्रियसामान्यस्य विशेषाणां च न कारणत्वम् । ननु योगिप्रत्यक्षे विषयतयाऽणुपरिमाणस्य १ ज्ञायमानसामान्यं प्रत्यासत्तिरिति मते अतीन्द्रियसामान्यस्य मनस्त्वादेः स्वाश्रयमनोज्ञानं प्रति २ ज्ञायमानलिंगमनुमितिजनकमिति मते अतीन्द्रियमनस्त्वादेरनुमितौ ३ च कारणत्वान्नेदं युक्तमिति चेन्न, योगिनो योगजधर्मेण अनागतादिविषयकप्रत्यक्षमिव अविद्यमानविषयकप्रत्यक्षस्यापि संभवेन अणुपरिमाणस्य योगिप्रत्यक्षे कारणत्वाकल्पनात् । एवं ज्ञायमानसामान्यस्य न प्रत्यासत्तित्वं ज्ञायमानलिंगस्य नानुमितिकरणत्वमिति सिद्धान्तमतावलम्बनस्यैव न्याय्यत्वात् । आत्ममानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वादात्मावृत्तीत्युक्तम् । यत्तु आचार्यमते तस्यापि न कारणत्वमिति तन्न, ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वादित्यलम् ॥ १४ ॥

यस्मिन् समवायसम्बन्धेन यत्कार्यमुत्पद्यते तस्य कार्यस्य तत्समवायिकारणम् । यथा कपाले समवायसंबन्धेन घट उत्पद्यतेऽतो घटस्य कपालं समवायिकारणम् । एवं च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वं समवायिकारणत्वमिति फलितम् ॥ १५ ॥

स्वसमवायिकारणे स्वसमवायिसमवायिकारणे वा समवायसम्बन्धेन वर्त्तमानं यत्तत्तस्यासमवायिकारणम्, यथा घटसमवायिकारणे कपाले समवायसम्बन्धेन कपालद्वयसंयोगस्य वर्त्तमानत्वेन घटं प्रति कपालसंयोगोऽसमवायिकारणम् १ घटरूपं प्रति कपालरूपं द्वितीयम् । एवञ्च समवायसम्बन्धावच्छिन्नकार्यतानिरूपित समवायस्वसमवायिसमवेतत्वान्यतरसंबन्धावच्छिन्नकारणताश्रयत्वमसमवायिकारणत्वमिति फलितम् । नचैवं पटसमवायिकारणे तंतौ तुरीतन्तुसंयोगस्य तेन विद्यमानत्वात् पटासमवायिकारणत्वन्तस्य स्यात्तथा चासमवायिकारणनाशे कार्यनाशः स्यादिति वाच्यम् । पटसमवायिकारणे आसन्नं तुरीतंतुसंयोगभिन्नं यत्तदस्यासमवायिकारणमिति पृथक् पृथगेवासमवायिकारणलक्षणस्वीकारात् । आत्मनो विशेषगुणानामिच्छादीनां कस्मिन्नपि कार्येऽसमवायिकारणत्वाभावेन सामान्यलक्षणे तद्भिन्नत्वं देयमेव, एवं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं ज्ञानादिभिन्नमसमवायिकारणमिति दिक् ॥ १६ ॥

स्वनिष्ठकार्यतानिरूपितकारणतावच्छेदको धर्मः स्वम्प्रत्यन्यथासिद्धः, यथा घटं प्रति दंडत्वम् ॥ १ ॥ स्वनिष्ठकार्यतानिरूपितकारणताश्रयजन्यः स्वं प्रत्य-

न्यथासिद्धः, यथा घटं प्रति दंडरूपम् ॥ २ ॥ स्वनिष्ठकार्यतानिरूपिता अन्यनिष्ठकार्यतानिरूपिता च या कारणता तदाश्रयः स्वं प्रत्यन्यथासिद्धः, यथा शब्दसमवायिकारणस्याकाशस्य शब्दं प्रति कारणत्वं गृहीत्वैव घटादिकं प्रति कारणत्वं गृह्यते, अत आकाशस्य घटं प्रत्यन्यथासिद्धत्वम् ॥ ३ ॥ स्वनिष्ठकार्यतानिरूपिता या स्वकारणनिष्ठकार्यतानिरूपितकारणता तदवच्छिन्नाश्रयः स्वं प्रत्यन्यथासिद्धः, यथा घटं प्रति कुलालपिता कुलालपितृत्वेनान्यथासिद्धः कुलालत्वेन रूपेण कारणमेव कुलालमात्रस्य घटं प्रति जनकत्वात् ॥ ४ ॥ स्वनिष्ठकार्यतानिरूपितावश्यक्लृप्तकारणतावच्छिन्नो यस्तत्स्वम्प्रत्यन्यथासिद्धः, यथा घटं प्रति रासभादिः, अत्र पञ्चमस्यैतस्य स्वीकारेणैव सिद्धे अन्यस्योपादानं प्रपञ्चार्थम् । न च दंडत्वस्यैव कारणत्वे को दोष इति वाच्यम्, दंडघटितपरंपरायाः कारणतावच्छेदकसम्बन्धत्वकल्पने गौरवादिति दिक् ॥ ५ ॥ १७ ॥

क्षित्यादीनां नवानान्तु द्रव्यत्वं गुणयोगिता । क्षितिर्जलं तथा तेजः पवनो मन एव च ॥ परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी । कालखात्मदिशां सर्वगतत्वं परमं महत् ॥ क्षित्यादि पंच भूतानि

चत्वारि स्पर्शवन्ति हि ॥ २६ ॥ कारिका । अत्र भूतत्वं बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्, यथा घ्राणादिबहिरिन्द्रियग्राह्यगन्धादिगुणवत्त्वं पृथिव्यादीनाम् । न च ज्ञातो घट इति ज्ञाने घटे ज्ञानं विषयतया प्रकारीभूय भासेत, तत्र ज्ञानस्याप्युपनीतभानविषयत्वात् अर्थात् ज्ञानलक्षणासन्निकर्षजन्यत्वात्, तद्वति आत्मन्यतिव्याप्तिरिति वाच्यम्. उक्तलक्षणे ग्राह्यपदेन लौकिकप्रत्यक्षस्वरूपयोग्यत्वस्य ग्रहणेनादोषात् । परमाणौ तु नाव्याप्तिः, तस्यापि स्वरूपयोग्यत्वात् । प्रत्यक्षप्रयोजकीभूतमहत्त्वादिकारणान्तरासन्निधानान्न प्रत्यक्षम् । ननु कारणतावच्छेदकधर्मवत्त्वं हि स्वरूपयोग्यत्वं तच्च न परमाणुरूपे तस्यानुद्भूतत्वादिति चेन्न, आत्माऽवृत्तिविशेषगुणवत्त्वस्यैव भूतत्वस्य स्वीकारान्न कोऽपि दोष इति दिक् ॥१८॥

आकाशात्मनोः अव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वञ्च साधर्म्यम्, तत्राव्याप्यवृत्तित्वं स्वाधिकरणवृत्त्यभावप्रतियोगित्वम्, यथा शब्दाधिकरणे आकाशे यत्किञ्चिद्देशावच्छेदेन शब्दाभावस्य विद्यमानत्वम् । एवं ज्ञानाधिकरणे विभावात्मनि शरीरान्यदेशावच्छेदेन ज्ञानाभावस्य सत्त्वादुभयोर्लक्षणसमन्वयः । क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रति-

योगित्वम् । शब्दज्ञानयोः प्रथमक्षणे उत्पत्तिर्द्वितीयक्षणे स्थितिस्तृतीयक्षणे नाश इति क्रमाल्लक्षणसमन्वयः । रूपादिविशेषगुणमादाय पृथिव्यादावतिव्याप्तिवारणार्थमव्याप्यवृत्तीति, अव्याप्यवृत्ति संयोगादिमादाय तत्रैवातिव्याप्तिवारणार्थं विशेषगुण इति चोक्तम् ( १ ) रूपादिकं क्षणिकविशेषगुणमादाय पृथिव्यादावतिव्याप्तिवारणार्थं क्षणिकविशेषगुणवत्त्वस्य चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वमित्यर्थः । एवं च चतुःक्षणवृत्ति यज्जन्यं घटादि तदवृत्तिर्जातिः शब्दत्वज्ञानत्वरूपा तद्वद्विशेषगुणयोः शब्दज्ञानयोराकाशात्मनोः सत्त्वाल्लक्षणसमन्वयः । ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वेऽपि जन्यज्ञानस्य कस्यापि तथात्वाभावेन ज्ञानत्वज्ञातावृतित्वं सुलभम् । रूपत्वादिजातिरपि न तथा तस्याः चतुःक्षणस्थायिरूपादौ वर्तनात् । यदि च कारिकायां शरीरीति पदेन जीवात्मन एव ग्रहणन्तदोक्तलक्षणे जन्येति न देयम्, द्वेषत्वादिकमादाय जीवात्मनि लक्षणसमन्वयादित्यन्यत्सर्वं सुगममिति दिक् ॥ १६ ॥

"तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता" ननु पृथिवीत्वजातेः प्रत्यक्षसिद्धत्वेपि अयोग्यसाधारण्येन प्रत्यक्षासम्भवात्तत्सिद्धौ किम्मानमिति चेन्न, सम-

वायसंबन्धावच्छिन्नगन्धत्वावच्छिन्नकार्यतानिरूपितकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्याद्यनुमानेन पृथिवीत्वजातिसिद्धेः। न च गन्धवत्त्वलक्षणस्य पाषाणादावव्याप्तत्वमिति वाच्यम्, यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमिति व्याप्त्या पाषाणध्वंसजन्ये भस्मनि गंधस्योपलंभनया पृथिवीत्वसिद्धौ तत्कारणस्यापि पाषाणस्य पृथिवीत्वसिद्धेरिति दिक्॥ २०॥

ननु विलक्षणसंस्थानविशेषैः परमाणुभिरेव अयं घट इत्यादिप्रतीतेरुपपत्तौ पृथिव्याः सावयवत्वे किं मानमिति चेन्न, परमाणुपुञ्जस्यातीन्द्रियत्वेन तद्रूपस्य घटादेरप्रत्यक्षत्वापत्तेः। यद्यपि दूरवर्त्येककेशस्याप्रत्यक्षत्वेऽपि केशसमूहस्य प्रत्यक्षत्वमिव परमाणुसमूहस्य प्रत्यक्षत्वसंभवः, तथापि सन्निधाने एकस्यापि केशस्य प्रत्यक्षतया तत्समूहे तत्संभवेऽपि परमाणौ तत्सम्भवस्य दुर्लभत्वात्। न चादृश्यपरमाणुपुञ्जात् घटादिरूपदृश्यपरमाणुपुञ्जोत्पत्तिरिति, न प्रत्यक्षे बाध इति वाच्यम्, अदृश्ये दृश्योत्पादकताया अदर्शनात्। अतितप्ततैलादौ तु तैलान्तर्वर्त्तिदृश्यदहनैरेव स्थूलदहनोत्पत्तेः। न च कथमदृश्यद्व्यणुकाद् दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम्। त्रसरेणौ

प्रत्यक्षोत्पादकमहत्त्वादिकारणसत्त्वेन प्रत्यक्षत्वसंभवेऽपि परमाणौ तदभावेन प्रत्यक्षत्वासंभवात्। एवञ्च घट इत्यादिप्रत्यक्षप्रतीत्या सावयवत्वसिद्धौ अवयविनामवयवानां चोत्पादविनाशयोः प्रत्यक्षसिद्धत्वेनानित्यत्वम्। एवमनियतावयवसंख्यत्वेन मेरुसर्षपयोः साम्यत्वभियाऽवयवधारायाः क्वचिद्विश्रमस्यावश्यकतया विश्रमस्थानस्य परमाणुत्वं नित्यत्वं च सिद्ध्यतीति दिक्॥ २१॥

शरीरत्वं न जातिः पृथिव्यादिना सांकर्यात् किंतु चेष्टाश्रयत्वम्। न च वृक्षादौ शरीरत्वसत्त्वे किं मानमिति वाच्यम्, प्राणवायुसम्बन्धस्यैव प्रमाणत्वात्। न च हिताहितप्राप्तिपरिहारजनकव्यापारस्य वृक्षादावसत्त्वेन प्राणवायुसंबंधस्य कथमवगम इति वाच्यम्, भग्ने क्षते च पुनः संरोहणस्य वृक्षेश्च दर्शनेन प्राणवायुसम्बन्धस्यावगमात् ( १ ) न च चेष्टाश्रयत्वस्य हस्ताद्यवयवेऽपि सत्त्वादतिव्याप्तिरिति वाच्यम्, हस्तादौ शरीरव्यवहारस्य सकललोकसिद्धत्वात्। अथवा चेष्टाश्रयत्वे सति अन्त्यावयवित्वमिति स्वीकारेणादोषात्। तत्त्वञ्च द्रव्यानारम्भकद्रव्यत्वं हस्तादौ तदभावेन लक्षणाघटनात्। नच लोष्टशरीरे मृतशरीरे च चेष्टाया अभावेन तत्राव्याप्तिरिति वाच्यम्, चेष्टा-

वदन्त्यावयविमात्रवृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वस्य — स्वीकारेण तादृशमानुषत्वचैत्रत्वादिकजातिमादाय प्रकृते लक्षणसमन्वयात् (२) न च नृसिंहवस्यैकव्यक्तिवृत्तितया देवत्वस्य जलीयतैजसशरीरवृत्तितया च जातित्वाभावेन नृसिंहशरीरे कथं लक्षणसमन्वय इति वाच्यम्, कल्पभेदेन नृसिंहशरीरस्यापि भेदेन नृसिंहत्वजात्या लक्षणसमन्वयादिति दिक् २२

ननु घ्राणेन्द्रियस्य पार्थिवत्वे किं मानमिति चेन्न, घ्राणेन्द्रियं पार्थिवम् रूपादिषु मध्ये गन्धस्यैव व्यंजकत्वात्, कुंकुमगन्धाभिव्यंजकगोघृतवदित्यनुमानस्यैव प्रमाणत्वात्। न च गोघृतस्य स्वकीयरूपस्यापि व्यंजकत्वेन घ्राणेन्द्रियस्य तदभावेन कथं दृष्टान्ततेति वाच्यम्, परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थतयाऽदोषात्। न च नूतनमृत्पात्रस्थजलस्यापि गन्धव्यंजकतया पार्थिवत्वापत्तिरिति वाच्यम्, जलस्य सक्तुरसस्यापि व्यंजकत्वेन रूपाद्यव्यंजकत्वाभावात्। यदि च वायूपनीतसुरभिभागस्य दृष्टान्तत्वमिष्यते तदा परकीयेति न देयम्। न च घ्राणेन्द्रियसन्निकर्षस्यापि गन्धमात्रव्यंजकतया तत्रातिव्याप्तिरिति वाच्यम्, द्रव्यत्वे सति रूपाद्यव्यंजकत्वादिति स्वीकारेणादोषादिति तत्त्वम्॥ २२॥

समवायसम्बन्धावच्छिन्नजन्यस्नेहत्वावच्छिन्नकार्यतानिरूपितकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात्, इत्यनुमानेन जन्यजलत्वजातिसिद्धौ जन्यजलत्वावच्छिन्नकार्यतानिरूपितकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन सामान्यजलत्वजातिसिद्धौ तस्याः परमाणुवृत्तित्वं सुलभमिति दिक् ॥ २४ ॥

"वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ। स्नेहस्तत्र द्रवत्वन्तु सांसिद्धिकमुदाहृतम्" ॥ स्फटिकादिपृथिव्यामतिव्याप्तिवारणाय शुक्ल इत्यस्य नैमित्तिकद्रवत्ववदवृत्ति रूपवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं द्रव्यत्वव्याप्य—वायुत्वजातिमादाय वायावतिव्याप्तिवारणाय रूपवद्वृत्तीति, पृथिवीत्वादिजातिमादाय पृथिव्यादावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववदवृत्तीति, पटत्वादिकमादाय पटादावतिव्याप्तिवारणार्थं साक्षादिति; अथवा अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमर्थः तादृशजलत्वजातिमादाय जलेलक्षणसमन्वयः १ शर्करादिपृथिव्यामतिव्याप्तिवारणाय मधुर इत्यस्य तिक्तरसवदवृत्ति मधुरवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमर्थः शीतलस्पर्श इत्यस्य शीतेतरस्पर्शवदवृत्ति

स्पर्शवद्वृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमर्थः। न च यमुनादिजले नीलत्वस्योपलम्भेन शुक्लवत्त्वमव्याप्त मिति वाच्यम्, यमुनादिजलस्याकाशे विक्षेपे धवलिम्न एवोपलम्भेन नीलत्वप्रतीतेराश्रयपृथि व्यौपाधिकत्वकल्पनात। नीलरूपजनकतावच्छेदक- पृथिवीत्वजातेर्जलेऽसत्त्वेन तत्र नीलरूपस्य कथमप्य- सम्भवात्। न च जम्बीरादिजले अम्लत्वस्योपल- ब्ध्या नारिकेलादिजले माधुर्यस्याश्रयौपाधिकत्व- मिति कल्पनाया आवश्यकत्वेन जले माधुर्यरसे किम्मानमिति चेन्न, हरीतक्यादिना सह जलपाने माधुर्यप्रतीतेः स्फुटत्वात्। जलोष्णसंयोगाद्धरीतक्या- मेव रसान्तरप्रादुर्भाव इति क्लिष्टकल्पनामात्रमिति दिक्॥ २५॥

समवायसम्बन्धावच्छिन्न—जन्योष्णस्पर्शत्वा- वच्छिन्नकार्यतानिरूपितकारणता किंचिद्धर्माव- च्छिन्ना कारणतात्वादित्यनुमानेन जन्यतेजस्त्व- जातिसिद्धौ जन्यतेजस्त्वावच्छिन्नकार्यतानिरूपित- कारणता किंचिद्धर्मावच्छिन्ना कारणतावादित्यनु- मानेन सामान्यतस्तेजस्त्वजातिसिद्धिः, तस्याश्च परमाणुवृत्तित्वं सुलभम्, चन्द्रकिरणादौ तदन्तः- पातिजलस्पर्शेनाभिभवात्, रत्नकिरणादौ पार्थिव-

स्पर्शेनाऽभिभवात् । चक्षुरादावनुद्भूतत्वाच्च उष्ण-स्पर्शाग्रह इति बोध्यम् ॥ २६ ॥

ननु सुवर्णं पार्थिवं नैमित्तिकद्रवत्ववत्त्वादित्यनुमानेन सुवर्णस्य पार्थिवत्वसिद्धौ तैजसत्वे किं मानमिति चेन्न, सुवर्णं तैजसम्, असति प्रतिबन्धकेऽत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वात्, यन्नैवं तन्नैवं यथा पृथिवी, इदन्त्वेवन्तस्मात्तथेत्यनुमानेन सुवर्णस्य तैजसत्वसिद्धेः । पृथिवीद्रवत्वस्य जन्यजलद्रवत्वस्य चाग्निसंयोगनाश्यत्वेन एतस्य च तदभावेन अप्रोजकत्वशंका न । न च सुवर्णे वन्हिसंयोगे पीतिमाश्रयस्य गुरुत्वाश्रयस्य च पार्थिवभागस्य द्रुतत्वेन पार्थिवत्वमपि स्यादिति वाच्यम् जलमध्यस्थमसीचूर्णवत् पार्थिवभागस्याद्रुतत्वात् । केचित्तु अत्यन्ताग्निसंयोगे पीतिमगुरुत्वाश्रयो विजातीयरूपप्रतिबंधकद्रवद्रव्यसंयुक्तः अत्यन्ताग्निसंयोगेऽपि पूर्वरूपविजातीयरूपानधिकरणत्वात् जलमध्यस्थपीतपटवदित्यनुमानेनैवंभूतस्य पृथिवीजलभिन्नस्य तैजसत्वसिद्धिरित्याहुः ॥ २७ ॥

समवायसम्बन्धावच्छिन्ना पाकजानुष्णाशीतत्वावच्छिन्नकार्यतानिरूपितकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन तत्कारणतावच्छेदकतया वायुत्वजातिसिद्धिः । ननु वायोः प्रत्यक्षागो-

चरतया तत्सत्त्वे मानाभाव इति चेन्न, स्पर्शादि-हेतुकानुमानेन तत्सिद्धेः, तथा हि योऽयं रूपवद्-द्रव्यासमवेतस्पर्शः स क्वचिदाश्रितः स्पर्शत्वात् पृथिवीसमवेतस्पर्शवत् १ असति रूपवद्द्रव्याभिघाते योऽयं पर्णादिषु शब्दसन्तानः स स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः अविभज्यमानावयवद्रव्यसम्बन्धिशब्दसन्तानत्वात् दंडाभिहतभेरीशब्दसन्तानवत् २ नभसि तृणतूलस्तनयित्नुविमानादीनां धृतिः स्पर्शवद्वेगवद्द्रव्यसंयोगहेतुका अस्मदाद्यनधिष्ठितद्रव्यधृतित्वात् नौकाधृतिवत् ३ रूपवद्द्रव्याभिघातमन्तरेण तृणे कम्पः स्पर्शवद्वेगवद्द्रव्याभिघातजन्यः विजातीयकर्मत्वात नदीपूराहतकाशादिकर्मवत् ॥ ४ ॥ २८ ॥

शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः विशेषगुणत्वात् इत्यनुमानेन आकाशसिद्धिः। ननु शब्दस्य विशेषगुणत्वे किम्मानमिति चेन्न, शब्दो विशेषगुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात् स्पर्शवत इत्यनुमानेन शब्दस्य विशेषगुणत्वसिद्धेः। अस्तु वा विशेषगुणत्वं द्रव्यसमवेतत्वं कथमिति चेदित्थं, शब्दो द्रव्यसमवेतो गुणत्वात्संयोगवदित्यनुमानेन। न चैतावता गगनसमवेतत्वमेव कुत इति चेदित्थं, शब्दो न स्पर्शवतः पृथिव्यादि

चतुष्टयस्य विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवदित्यनुमानेन पृथिव्यादिचतुष्टयस्य न शब्दविशेषगुणाश्रयत्वमिति सिद्ध्यति । एवं शब्दो न दिक्कालमनसां गुणः विशेषगुणत्वात् । एवं नात्मविशेषगुणो बहिरिन्द्रियग्राह्यत्वादित्येवं शब्दाधिकरणत्वेनाकाशसिद्धिरिति दिक् ॥ २६ ॥

इदानीं घटो वर्त्तते इत्यादिप्रतीत्या तत्तत्कार्योत्पत्त्यधिकरणत्वेन कालो विषयीक्रियते इति कार्यमात्रं प्रति कालस्य निमित्तहेतुत्वम् । एवं परत्वापरत्वबुद्धेरसाधारणं कारणं लाघवादेकः काल एव ननु कालस्यैकत्वे क्षणदिनमासादिव्यवहारो न स्यात् एकस्मिन्विरुद्धनानाव्यवहारायोगादिति चेन्न, उपाधिभेदेनोक्तव्यवहारापपत्तेः। उपाधिश्चात्र स्वजन्यविभागप्रागभावावच्छिन्नं कर्म १ पूर्वसंयोगावच्छिन्नविभागो वा २ पूर्वसंयोगनाशावच्छिन्न उत्तरसंयोगप्रागभावो वा ३ पूर्वसंयोगावच्छिन्नं कर्म वा ४ इदमत्र तत्त्वं वस्तुनि यस्मिन्क्षणे क्रिया जायते, तद्द्वितीयक्षणे तयैव क्रियया वस्तुनः पूर्वदेशाद्विभागो भवति, तदुत्तरतृतीयक्षणे पूर्वसंयोगनाशः यदुत्तरचतुर्थक्षणे तयैव क्रिययोत्तरसंयोगः, ततः पंचमक्षणे तत्क्रियानाश इति नियमात् ।

द्वितीयक्षणे विभागस्यावश्यंभावात्तत्प्रागभाववैशिष्ट्यं तज्जनककर्मणः क्षणमात्रं संभवतीति तस्य क्षणोपाधित्वम्। एवं तृतीयक्षणे पूर्वसंयोगनाशस्यावश्यंभावाद्विभागस्य द्वितीयक्षण एव पूर्वसंयोगविशिष्टत्वात्तादृशस्य तस्य द्वितीयक्षणोपाधित्वम्। एवं तृतीयचतुर्थयोरपि क्षणिकत्वात्क्षणोपाधित्वम्। प्रतिक्षणं क्रियोत्पत्तौ मानाभावाद् द्वितीयाद्युपाधिप्रदर्शनमिति ॥ ३० ॥

समवायसम्बन्धावच्छिन्न-सुखदुःखज्ञानेच्छाद्यवच्छिन्न-कार्यतानिरूपितकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेनात्मत्वजातिसिद्धिः। आत्मा वा रे द्रष्टव्य इत्यादि-श्रुत्या ईश्वरेऽपि सा जातिरस्त्येव सुखादेरदृष्टादिरूपकारणाभावादीश्वरे न सुखाद्युत्पत्तिः,जलपरमाणौ स्नेहानुत्पत्त्या नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभाव इति नियमस्याप्रयोजकत्वेन नेश्वरस्य स्वरूपयोग्यत्वेन फलोपधानापत्तिः। प्राचीनास्तु ईश्वरे आत्मत्वजातिर्नास्ति प्रमाणाभावात्। न च दशमद्रव्यत्वापत्तिरिति वाच्यम्, ज्ञानवत्त्वेन विभजनादित्याहुः ॥ ३१ ॥

ननु यथा नैयायिकसिद्धान्ते मुक्तात्मनां ज्ञानाभावेन ज्ञानाधिकरणस्वरूपचैतन्यं न तथा मन्मते-

ऽपि मृतशरीरस्य न चैतन्यमिति शरीरमेवात्मेति वादिचार्वाकमतं युक्तमिति चेन्न, शरीराणामवयवोपचयापचयैरनित्यतया बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः । यदि च पूर्वशरीरोत्पन्नसंस्कारेण उत्तरशरीरे संस्कार उत्पद्यते इति नोक्तदोष इत्युच्यते, तर्हि संस्कारानन्त्यगौरवस्य कल्पनीयत्वात् । किं च प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य कारणत्वेन जन्मकाले इष्टसाधनतास्मारकस्य कस्याप्यभावेन स्तन्यपानादौ बालकस्य प्रवृत्त्यनुपपत्तेः । मन्मते तु आत्मनो नित्यतया जीवनादृष्टसहकारिवशादिष्टसाधनत्वस्य स्मरणात् तस्मिन्प्रवृत्तिः सुलभा, अत एव च आत्मनो नित्यत्वं सिद्ध्यतीति दिक् ॥ ३२ ॥

ननु चक्षुरादीनामिन्द्रियाणामेव ज्ञानादिकं प्रति कर्तृत्वं करणत्वं चास्तु विरोधे साधकाभावात्किमतिरिक्तात्मनेति चेन्न, चक्षुरादिनाऽनुभूतस्य चक्षुरादिनाशे स्मरणानुपपत्तेः, अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावाभ्युपगमात्, अन्येन दृष्टस्यान्येन स्मरणेऽतिप्रसंगात् १ ननु मनसो नित्यत्वेन चैतन्यमस्तु किमात्मनेति चेन्न, तस्याणुत्वेन प्रत्यक्षे च महत्वस्य कारणत्वान्मनसि ज्ञानसुखादिसत्वे तत्प्रत्यक्षानुपपत्तेरिति दिक् ॥ ३३ ॥

ननु विज्ञानं द्विविधं प्रवृत्तिविज्ञानमालयविज्ञानं च, अयं घट इत्यादि प्रवृत्तिविज्ञानम् । अहं जानामीत्याद्यालयविज्ञानं, तदेवात्मा तस्य विज्ञानस्य स्वतः प्रकाशरूपत्वेन चेतनत्वम् । न चात्मनो विज्ञानरूपत्वे ज्ञानसुखादेर्गुणस्य का गतिरिति वाच्यम् तेषां विज्ञानाकारविशेषत्वात् । विज्ञानरूपस्य सर्वस्यापि भावत्वेन क्षणिकत्वं समानम् । न च पूर्वविज्ञाननाशानन्तरमुत्पादकाभावेन विज्ञानान्तरानुत्पत्तौ सुप्तोत्थितस्य स्मरणानुपपत्तिरिति वाच्यम् मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नोक्तदोषावकाश इति क्षणिकविज्ञानवादिमतं युक्तमिति चेन्न, विज्ञानस्य जगद्विषयकत्वे सर्वस्यापि सर्वज्ञत्वापत्तेः। यत्किंचिद्विषयकत्वे विनिगमनाविरहात् । विज्ञानधारायाः सुषुप्तावपि सत्त्वेन तदानीमपि विषयावभासप्रसंगात् । न च सुषुप्तौ निर्विषयैव विज्ञानसंततिरनुवर्त्तत इति वाच्यम्, विज्ञानसंततेः स्वप्रकाशत्वे मानाभावात् १ न च मन्मते विज्ञानव्यतिरिक्तवस्तुनोऽभावेन घटादेरपि विज्ञानरूपत्वेन स्वप्रकाशत्वमिति वाच्यम्, प्रत्यक्षानुभूयमानस्य घटादेरपलापितुमशक्यत्वात् । न च घटादिकं सर्वमेव वस्तु विज्ञानाकारविशेष

इति वाच्यम्,तस्य चाकारविशेषस्य विज्ञानादिभिन्नत्वे विज्ञानव्यतिरिक्तत्वसिद्ध्या तव मतस्यैवासिद्ध्यापत्तेः। अभिन्नत्वे च नीलपीते इति समूहालंबने स्वरूपतो विज्ञानस्याविशेषात्,नीलाकारोऽपि पीताकारः स्यात् न च नीलाकारपीताकारयोरभिन्नत्वेपि परस्परव्यावर्त्तकरूपस्यापोहरूपस्य नीलत्वपीतत्वादेर्विज्ञानधर्मस्य भेदप्रतीतिकारकस्य सत्वेन नोक्तदोषइति वाच्यम् एकस्मिन्विज्ञाने विरुद्धत्वान्नीलत्वादीनां समावेशासंभवात् । न च समूहालंबने चित्राकार एव विज्ञानमिति नोक्तदोष इति वाच्यम्, वासनासंक्रमस्वीकारे मात्राऽनुभूतस्य गर्भस्थेन तनयेन स्मरणप्रसंगात् । ननु उपादानेनानुभूतमुपादेयेन स्मर्यत इति चेन्न, अचेतनाया वासनायाः संक्रमासम्भवात् । नाप्युत्तरस्मिन्नुत्पत्तिरेव संक्रमः तदुत्पादकाभावात् । न च ज्ञानानामेवोत्पादकत्वमिति वाच्यम्, संस्कारानन्त्यापत्तेः । न चोत्तरोत्तरविज्ञानोत्पादकानुकूलशक्तिविशेषः क्षणिकविज्ञाने कल्प्यत इति वाच्यम्, मानाभावात् गौरवाच्च। ननु क्षणिकविज्ञाने चैतन्याऽसिद्धत्वेऽपि क्षणिकशरीरे चैतन्यस्वीकारे बाधकाभावः । यथा कुसूलस्थबीजादंकुरानुत्पत्तये अंकुरजनकतावच्छेदकरूपस्य कुर्वद्रूपत्वस्यांकुरत्वावच्छिन्नं प्रति हेतुत्वांगीकारः । एवं कुर्वद्रूपत्वेनैव क्षणिकश-

रीरेषु उत्तरोत्तरशरीरनिष्ठवासनोत्पादकत्वं वाच्यमिति चेन्न, कुसूलस्थबीजेषु धरणिसलिलसंयोगादिरूपसहकारिकारणस्यांकुरोत्पादकस्याभावेन अंकुरानुत्पत्तिसिद्धौ कुर्वद्रूपत्वकल्पनादिति दिक् ॥ ३४ ॥

ननु आत्मनः क्षणिकविज्ञानस्वरूपत्वपक्षे उक्तदोषसत्त्वेऽपि अविनाशी वा अरेऽयमात्मा सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्या नित्यविज्ञानरूपस्यात्मनो वेदान्तिमतसिद्धस्य स्वीकारे का क्षतिरिति चेन्न, विज्ञानस्य जगद्विषयकत्वे सर्वज्ञत्वापत्तेः। यत्किञ्चिद्विषयकत्वे विनिगमकाभावस्योपपादितत्वात्। सविषयकज्ञानस्यानुभवसिद्धतया निर्विषयस्य ज्ञानत्वे मानाभावाच्च। सत्यं ज्ञानमित्यादि श्रुतिस्तु ब्रह्मप्रतिपादिकैव न जीवपरा। न च जीवेश्वरयोरैक्याज्जीवस्यापि ज्ञानरूपत्वं निर्बाधमिति वाच्यम्, ज्ञानाज्ञानसुखित्वदुःखित्वादिभिर्जीवानां परस्परभेदसिद्धौ सुतरामीश्वरभेदस्य सिद्धत्वात्। जीवानामेकत्वे तु एकस्य मुक्तौ सर्वे मुक्ताः, एकस्य बंधे सर्वे बद्धाश्च स्युः। न च तत्त्वमसीति वाक्यात्तच्छब्दप्रतिपाद्यब्रह्मणि युष्मच्छब्दप्रतिपाद्यजीवस्याभेदबोधनमिति वाच्यम्, अभेदभावनयैव यतितव्यमिति श्रुत्याऽभेदस्यारोपितत्वात्। अत एव सर्वे जीवा आत्मनि समर्पिता इति भेद-

प्रतिपादिका श्रुतिः संगच्छते। न च मोक्षदशायामज्ञाननिवृत्तावीश्वरेण सहाभेदो जायत इति वाच्यम्, नित्यस्य भेदस्य नाशासम्भवात्, भेदनाशेऽपि व्यक्तिद्वयस्थितेस्तादवस्थ्याच्च। न च मोक्षदशायामज्ञाननाशे द्वित्वमपि नश्यतीति वाच्यम्, तव मते निर्धर्मके ब्रह्मणि सत्यत्वादेरभावेपि सत्यादिरूपस्य स्वीकारवत् मन्मतेऽपि द्वित्वाभावेऽपि व्यक्तिद्वयात्मकस्य वक्तुं शक्यत्वात् । ब्रह्मविद्ब्रह्मैव भवतीति श्रुत्याऽभेदबोधनमपि संपदाधिक्ये पुरोहितोऽयं राजा संवृत्त इति वत्साम्यपर्यवसायि । निरञ्जनः परमं साम्यमुपैतीति श्रुत्यन्तरानुरोधात् । आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेति श्रुत्यैकवाक्यत्वसिद्धये सत्यं ज्ञानमनन्तमिति श्रुतौ ज्ञानादिपदे अर्शआदित्वान्मत्वर्थीयप्रत्ययेन ज्ञानाश्रयत्वादिकल्पनयैव युक्तत्वादिति संक्षेपः ॥ ३५ ॥

सांख्यवादिनस्तु यथा पद्मपत्रमम्भसा लिप्तं न भवति एवं पुरुषः कर्तृत्वाद्याश्रयो न भवति। तथा हि पुरुषः कर्तृत्वाभाववान् कारणत्वाभावादित्यनुमानेन तस्याऽकर्तृत्वं चेतनत्वन्तु तस्येष्टमेव सति च कारणत्वे कार्यकारणयोरभेदात्कार्यनाशे पुरुषनाशापत्तेः बुद्धिगतचैतन्याभिमानस्यान्यथानुपपत्त्या पुरुषकल्पनाया आवश्यकत्वात् । मूलप्रकृतिः सर्वकार्यकर्त्री

बुद्धिस्तुः प्रकृतेः परिणामविशेषः सैव महत्तत्त्वमन्तःकरणमुच्यते । न च पुरुषस्य कर्तृत्वाभावे तत्र धर्माधर्मयोरनुत्पत्तौ तदधीनसुखादेश्चानुत्पत्तौ दुःखध्वंसरूपो मोक्षः पुरुषस्य न स्यादिति वाच्यम् बुद्धिसत्त्वे इन्द्रियप्रणालिकया निर्गतान्तःकरणेन घटादिविषयसंबन्धात्संसारः।बुद्धेरसत्त्वे घटादिविषयसम्बन्धासम्भवान्मोक्ष इत्यस्याभ्युपगमात् । पुरुषे कर्तृत्वाद्यभिमानस्तु बुद्धेः स्वच्छतया तत्संबन्धाद्दर्पणे मुखमिवातात्त्विकः, ज्ञानादिकन्तु कृतिसामानाधिकरण्येन बुद्धिनिष्ठमेव परिणामित्वाच्च न तस्याश्चेतनत्वमित्यादिकं वदन्ति तन्न युक्तिसहम्, चेतनोऽहं करोमीति सामानाधिकरण्येनाबाधितप्रतीत्या कर्तृभिन्ने पुरुषे मानाभावात् । न चोक्तप्रतीतौ चैतन्यांशे भ्रम इति वाच्यम्, कृत्यंशेऽपि भ्रमस्य तुल्यत्वात् । बुद्धिः कर्तृत्वाभाववती जन्यधर्माश्रयत्वादिति बाधस्यात्रापि सत्त्वात् ( १ ) न च "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥" इत्यनेन विरोध इति वाच्यम्, प्रकृतेरदृष्टस्य गुणैः अदृष्टजन्यैरिच्छादिभिः कर्त्ताऽहं कर्त्ताऽहमेवेत्याद्यर्थात् । अत एव 'तत्रैवं सति कर्त्तारमात्मानं केवलन्तु यः' इत्यादिकं भगवतोक्तं संगच्छते इति दिक् ॥ ३६ ॥

इन्द्रियार्थसन्निकर्षोत्पन्नं अव्यपदेश्यं ( निर्विकल्पकं ) अव्यभिचारि ( भ्रमाभिन्नम् ) व्यवसायात्मकं ( विशिष्टज्ञानात्मकम् ) ज्ञानं प्रत्यक्षमिति सूत्ररीत्या लौकिकप्रत्यक्षलक्षणन्तु इन्द्रियत्वेन रूपेण यत्र ज्ञाने इन्द्रियाणां करणत्वन्तत्, तेन मनोरूपेन्द्रियजन्यज्ञाने नातिव्याप्तिः । ईश्वरसाधारणप्रत्यक्षलक्षणन्तु ज्ञानाकरणकं ज्ञानम् । एवञ्च व्याप्तिज्ञानस्यानुमितौ सादृश्यज्ञानस्योपमितौ पदज्ञानस्य शाब्दबोधे अनुभवस्य च स्मरणे कारणत्वान्न तेषु अतिव्याप्तिरिति दिक् ॥ ३७ ॥

परामर्शजन्यं ज्ञानमनुमितिः, व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः, यथा येन पुरुषेण महानसादौ धूमे यत्र यत्र धूमस्तत्र तत्र वन्हिरिति वन्हेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमरेखां पश्यति तदनन्तरं धूमो वन्हिव्याप्य इत्येवं व्याप्तिस्मरणं भवति पश्चाच्च वन्हिव्याप्यधूमवानयमिति ज्ञानं भवति, अयमेव परामर्श इत्युच्यते तदनन्तरं पर्वतो वन्हिमानित्यनुमितिर्जायते इति परामर्शजन्यत्वमनुमानस्य । न च परामर्शप्रत्यक्षादेरपि परामर्शजन्यत्वेन तत्रातिव्याप्तिरिति वाच्यम्, हेत्वविषयकत्वे सति परामर्शजन्यत्वमित्यनुमितेर्लक्षणस्वीकारेणादोषात् । न च कादाचित्कहेतुविषय-

कानुमितावव्याप्तिरिति वाच्यम्, हेत्वविषयकत्वे सति परामर्शजन्यं यज्ज्ञानं तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वस्य स्वीकारेणादोषात्, केचित्तु परामर्शशरीरे पक्षधर्मतायाः प्रवेशेन गौरवात्, व्याप्तिज्ञानकरणकं ज्ञानमनुमितिरित्याहुः । केचित्तु अनुमितिं प्रत्यपि व्याप्तिज्ञानत्वेन न कारणत्वं किंतु ज्ञानत्वेनैव । तथा च यां कांचिदनुमितिव्यक्तिमादाय एतद्व्यक्तिवृत्ति-प्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वमिति वदन्ति ।३८।

प्राचीनमते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे रूपं कारणन्तन्न युक्तम् । वायोस्त्वगिन्द्रियेणाग्रहणापत्तेः प्रमाणाभावाच्च । किंतु अन्वयव्यतिरेकाभ्यां चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणम् । न चाकाशस्य बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षाभावे रूपाभावस्पर्शाभावयोः कारणत्वकल्पने गौरवाल्लाघवाद्रूपस्यैव बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे कारणत्वमिति वाच्यम्, आत्माऽवृत्तिशब्दभिन्नविशेषगुणवत्त्वस्यैवोक्तप्रत्यक्षे कारणत्वकल्पनेनादोषात् । अत एव वायुं स्पृशामि प्रभां पश्यामीत्यादिप्रतीतिरुपपद्यते प्रभागतसंख्यापरिमाणप्रत्यक्षमिव वायुगतयोरपि तयोः प्रत्यक्षत्वमिष्टमेवेति नवीना आहुः ॥ ३९ ॥

त्वङ्मनःसंयोगस्य ज्ञानमात्रे कारणत्वं, तेन सुषुप्तिकाले त्वचा सह मनोयोगाभावान्न किमपि ज्ञानं

जन्यते। न च तत्काले चक्षुरादिना मनःसंयोगाभावात् विषयसंयोगस्याप्यभावेन न चाक्षुषादिप्रत्यक्षसंभवः। ज्ञानादेरभावान्न मानसम्। व्याप्तिज्ञानाभावान्नानुमितिः। सादृश्यज्ञानाभावान्नोपमितिः। पदज्ञानाभावान्न शाब्दबोधः। उक्तानुभवसामग्र्यभावान्नानुभवः। उद्बोधकाभावान्न स्मरणमिति किं ज्ञानं भविष्यतीति वाच्यम्, सुषुप्तव्यवहितप्राक्क्षणोत्पन्नेच्छादिना मनःसंयोगस्यात्मनि सत्वेन आत्मनः प्रत्यक्षत्वप्रसंगात् (१) अत्र केचित् ज्ञानमात्रे त्वङ्मनःसंयोगस्य कारणत्वे रासनप्रत्यक्षकाले चाक्षुषप्रत्यक्षकाले च विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वेन स्पार्शनप्रत्यक्षं स्यात्। न च पूर्वसामग्र्या अपरज्ञाने प्रतिबन्धकत्वान्नोक्तदोष इति वाच्यम्, परस्परप्रतिबन्धात्किमपि ज्ञानं न स्यादिति प्राहुः तन्न, फलबलात्कल्पनाया आवश्यकत्वे चाक्षुषादिप्रत्यक्षकाले स्पार्शनप्रत्यक्षरूपफलस्याभावेन चाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वकल्पनाया न्याय्यत्वात्। अथवा चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न स्पार्शनप्रत्यक्षसंभव इति दिक् ४०

विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेन चक्षुःसंयोगानन्तरं घट इति घटत्वविशिष्टज्ञानं न संभवति विशेषणस्य घटत्वस्य पूर्वमज्ञानात्, अतो घट-

घटत्वयोः पूर्वं वैशिष्ट्यानवगाह्येव ज्ञानं जायते तदेव च निर्विकल्पकमित्युच्यते एतच्चातीन्द्रियम्, घटमहं जानामीति प्रतीत्या आत्मनि ज्ञानं ज्ञाने घटस्तत्र घटत्वं प्रकारीभूय ( विशेषणं भूत्वा ) भासते विशेषणे यद्विशेषणन्ताद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकार इति ज्ञाने विशिष्टभानं न संभवति। न च घटत्वाद्यप्रकारकमेव विशिष्टज्ञानं जायतामिति वाच्यम्, जात्यतिरिक्तपदार्थस्य किंचिद्धर्मप्रकारकत्वमिति नियमादिति दिक्॥ ४१॥

घ्राणज-रासन-चाक्षुष-स्पार्शन-श्रौत्र-मानसमिति षड्विधे द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणम्। द्रव्यसमवेत-गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन द्रव्यसमवेत-समवेत-गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणम्। एवं द्रव्यचाक्षुषं प्रति आलोकसंयोगः उद्भूतरूपं च समवायसम्बन्धेन, द्रव्यसमवेतरूपादिप्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन, द्रव्यसमवेतसमवेतरूपत्वादेः प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणम्॥ १॥

षड्विधप्रत्यक्षे इन्द्रियं कारणम्, तत्रेन्द्रियत्वं न

जातिः, पृथिवीत्वादिना सांकर्यात्, किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् । अत्र सत्यन्तानुपादाने आत्मनस्तादृशसंयोगाश्रयत्वेनेन्द्रियत्वापत्तेः । शब्देतरेत्यनुपादाने श्रोत्रे उद्भूतविशेषगुणस्य शब्दस्य सत्त्वेनेन्द्रियत्वानापत्तेः। उद्भूतेत्यनुपादाने चक्षुरादौ विशेषगुणस्य रूपादेः सत्त्वेनानिन्द्रियत्वापत्तेः । विशेषेत्यनुपादाने शुक्लत्वादिव्याप्यनानानुद्भूतत्वाभावकूटरूपस्योद्भूतत्वस्य संयोगादावपि सत्त्वेन तदाश्रये चक्षुरादावव्याप्त्यापत्तेः । कालादाविन्द्रियत्ववारणाय विशेष्योपादानमिति दिक् ॥ ४२ ॥

"विषयेन्द्रिसम्बन्धो व्यापारः सोऽपि षड्विधः । द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ द्रव्येषु समवेतानां तथा तत्समवायतः । तत्रापि समवेतानां शब्दस्य समवायतः ॥ तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ॥ प्रत्यक्षं समवायस्य विशेषणतया भवेत् । विशेषणतया तद्वदभावानां ग्रहो भवेत् । यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥ " इत्यनया रीत्या लौकिकप्रत्यक्षे षोढा सन्निकर्षो ( व्यापारः संबन्धः) वर्णितः स तु विस्तरभयान्नेह प्रपञ्चितः॥४३।

ननु पृथिवीपरमाणुनीले घटनीलमादाय महत्त्वसंबन्धस्य सत्त्वेन नीलत्वस्य चाक्षुषप्रत्यक्षं कुतो न,

एवं पृथिवीपरमाणौ पृथिवीत्वस्य घटादिकमादाय महत्त्वसम्बन्धात्तत्प्रत्यक्षं कुतो नेति चेन्न, उद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे कारणत्वात्। तथा च परमाणुनीलादौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावान्न नीलत्वादिग्रहः। एवं वायौ तदीयसत्तायाश्च चक्षुसंयोगस्य रूपावच्छिन्नत्वाभावेन तयोश्चाक्षुषं प्रत्यक्षन्नेति। अत्रालोकसंयोगत्वावच्छिन्नत्वमपि विशेषणदानादन्धकारादौ न घटादेः प्रत्यक्षत्वमिति दिक् ॥४४॥

भूतले घटज्ञाने घटाभावज्ञानं न भवति, अतोऽभावप्रत्यक्षे प्रतियोगिनो घटादेरुपलम्भाभावः कारणम्। तत्र च प्रतियोगिसत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा योग्यताप्यपेक्षिता। अस्याश्च प्रतियोगिनो घटादेः सत्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुरित्यर्थः। तेन यत्रालोकसंयोगादिकं वर्तते तत्र यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते तत्रैव घटाभावादिप्रत्यक्षं भवति नत्वन्धकारे तत्र तादृशापादनाऽसंभवात् संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता अन्योन्याभावप्रत्यक्षे तु अधिकरणयोग्यताऽपेक्षिता, अतः स्तंभादौ पिशाचादिभेदोपि चक्षुषा गृह्यत एवेति दिक्॥४५॥

अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्त्तितः ।
सामान्यलक्षणाज्ञानलक्षणायोगजस्तथा"॥ १ ॥

इति कारिकोपलक्षितसामान्यस्वरूपा प्रत्यासत्तिः ( अलौकिकसम्बन्धः ) द्विविधा नित्या घटत्वादिरूपा अनित्या घटादिरूपा च सामान्यस्वरूपेत्यस्य इन्द्रियसम्बद्धविशेष्यकज्ञानप्रकारीभूतेत्यर्थः । यथा इन्द्रियसम्बद्धं धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं तस्मिन्प्रकारीभूतेन धूमत्वेन सन्निकर्षेण सकलधूमविषयकं धूमा इति ज्ञानं जायते ॥ १ ॥

अत्रेन्द्रियसंबद्धप्रकारीभूतं सामान्यं प्रत्यासत्तिरित्येतावदुक्तौ तु धूलीपटले धूमत्वभ्रमानन्तरं धूमत्वेन सहेन्द्रियसम्बन्धाभावात्सकलधूमविषयकं ज्ञानं न स्यात् । सिद्धान्ते तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतेन धूमत्वेन सन्निकर्षेण सकलधूमविषयकं ज्ञानं सिद्धम् २

मानसस्थले ज्ञानप्रकारीभूतं सामान्यमेव प्रत्यासत्तिः,तेनाणुत्वेन यत्किञ्चिदणूपस्थितौ अणुत्वसामान्यलक्षणया सकलाणुगोचरो मानसबोधः सिद्धः ३

यत्र चैको घटः संयोगेन भूतले समवायेन वा कपाले ज्ञातः, तत्रानित्यघटादिरूपसामान्यप्रत्यासत्त्या सर्वेषान्तद्घटवतां भूतलानां कपालानां च ज्ञानं सिद्धमिति ( ४ ) ॥ ४६ ॥

ननु यत्र पूर्वदिने इन्द्रियसम्बद्धविशेष्यकं घट इति ज्ञानं जातं तत्राग्रिमदिने इन्द्रियसम्बन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्वात्सकलघटविषयकं ज्ञानं स्यादिति, चेन्न सामान्यलक्षणेत्यत्र लक्षणशब्दस्य विषयार्थकत्वेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थकरणेनादोषात् (१) नन्वेवमपि चक्षुः संयोगादिकं विनापि सामान्यविषयज्ञानप्रत्यासत्त्या सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादिति चेन्न, सामान्यलक्षणया बहिरिन्द्रियजन्यज्ञाने चक्षुःसंयोगालोकसंयोगादिसामग्र्या अप्यपेक्षितत्वेनादोषात् (२)

ननु सामान्यलक्षणाप्रत्यासत्तिज्ञानलक्षणाप्रत्यासत्त्योर्ज्ञानरूपत्वेन कस्तयोर्भेद इति चेन्न, सामान्यलक्षणप्रत्यासत्त्या आश्रयाणां (सकलवह्निधूमादीनां ज्ञानं) ज्ञानलक्षणया तु यद्विषयकं ज्ञानं जातं तस्यैव ज्ञानं जन्यत इति भेदस्य स्पष्टत्वात् (३) सामान्यलक्षणप्रत्यासत्तेरस्वीकारे धूमप्रत्यक्षानन्तरं धूमो वह्निव्याप्यो न वेति संशयानुपपत्तिदोषः। तत्स्वीकारे तु तया सकलधूमोपस्थितौ अनुपलक्षितधूमे वह्निव्याप्यत्वसन्देहः (४) नचैवं प्रमेयत्वेन सकलप्रमेये ज्ञाते सर्वस्य सर्वज्ञत्वापत्तिरिति वाच्यम्,

विशिष्य सकलपदार्थज्ञानाभावेन तत्त्वाभावात् ५।४७

ननु किमर्थं ज्ञानलक्षणाप्रत्यासत्तेः स्वीकार इति चेन्न, सुरभि चन्दनमिति ज्ञाते चन्दनखंडस्य चाक्षुषे जायमाने सौरभस्योपस्थितावपि सौरभांशे चक्षुःसन्निकर्षाभावात्सौरभभानानुपपत्तेः। न च सौरभत्वसामान्यलक्षणप्रत्यासत्त्या सौरभज्ञानमिति वाच्यम् तदानीं सौरभत्वांशे धर्मान्तरस्यागृहीततया सामान्यलक्षणया तद्भानानिर्वाहात्। किन्तु ज्ञानलक्षणयैव स्वरूपतः सौरभत्वस्य भानमिति दिक् ॥४८॥

प्रत्यक्षखंडस्य सती विवृतिः परीक्षणे चिन्तितमानसानाम्।
मुदे कृता श्रीहरिशङ्करेण दिगम्बरस्यात्मजमैथिलेन ॥ १ ॥

वसुरामवसुचन्द्रे च शके ग्रीष्मे गुरौ सिते।
शिवे समाप्तिमगमच्छिवयोः पादसेवनात् ॥ २ ॥

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितसिद्धान्तमुक्तावली प्रत्यक्षखण्डस्य मैथिलढाडीनिवासिझोपनामकहरिशङ्करशर्मसंगृहीता विवृतिः समाप्ता ॥

## सिद्धान्त-मुक्तावल्याः

## अनुमानखण्डस्य प्रश्नोत्तरमाला

ननु द्विविधादपि परामर्शात्पक्षः साध्यवानित्येवानुमितिरित्यन्ये इति ग्रन्थेन पक्षविशेष्यकसाध्यप्रकारकानुमितिं प्रति पक्षविशेष्यकसाध्यव्याप्यहेतुप्रकारकपरामर्शस्य साध्यव्याप्यहेतुविशेष्यकपक्षप्रकारकपरामर्शस्य च कारणत्वम्प्रतीयते तच्चोभयोरेकस्यानुगतधर्मस्याभावाद्व्यभिचारेण न सम्भवतीति चेत, इदमत्र प्रतिविधानम् वन्हिव्याप्यधूमवान्पर्वत इति परामर्शस्य वन्हिव्याप्यधूमः पर्वते इति परामर्शस्य च वन्हित्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वावच्छिन्नम्प्रति संयोगसम्बन्धावच्छिन्नाधेयत्वसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नपर्वतत्वावच्छिन्नविषयतानिरूपितसंयोगसम्बन्धातिरिक्तसम्बन्धानवच्छिन्नवन्हिव्याप्य-धूमत्वावच्छिन्नविषयताकनिश्चयत्वेन द्विविधपरामर्शानुगतेन कारणत्वमित्येवं कार्यकारणभावः सम्भवत्येव एतच्च विशेष्यतायाः सम्बन्धानवच्छिन्नत्वपक्षे बोध्यम्, ननु साध्यवदन्यावृत्तित्वस्य हेतुभेदेऽप्यभिन्नस्य लघुभूतस्य व्याप्तिलक्षणस्य सत्वे अथवा हेतुमान्नि-

ष्ठेत्यादिना लक्षणान्तरस्य गुरुभूतस्याननुगतस्याभिधानं किमर्थं केवलान्वयिसाध्यकानुमानस्य परैरनंगीकारादेव तत्राऽव्याप्त्युपन्यासस्य तत्रायुक्तत्वादिति, अत्रोत्तरम् वन्हिमान्धूमादित्यादौ साध्यवदन्यस्मिन्धूमावयवे ह्रदे वा समवायेन कालिकेन वा धूमस्य वृत्त्याऽव्याप्तेरुक्तलक्षणे वृत्तित्वस्य हेतुतावच्छेदकसम्बन्धावच्छिन्नस्यावश्यंनिवेशनीयतया सत्तावाञ्जातेरित्यादौ सत्तारूपसाध्यवद्भ्यो द्रव्यगुणकर्मभ्यो भिन्ने जात्यादौ हेतुतावच्छेदकेन समवायेन कस्याप्यवृत्त्या तादृशवृत्तित्वस्याप्रसिद्ध्या तदभावस्याप्रसिद्धेरव्याप्त्या गुरुभूतमपि हेतुभेदभिन्नमूर्तिकमपि हेतुमन्निष्ठेत्यादि लक्षणमुपादेयमिति—

ननु प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानाधिकरणत्वस्य वा हेत्वधिकरणे निवेशे को दोषो येन प्रतियोगिताविशेषघटितमेव लक्षणमादृतमिति । अत्रोत्तरम्—यद्यपि घटाभावस्य यथा घटः प्रतियोगी तथा पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावस्याभावोऽपि यतः पूर्वक्षणवृत्तित्वविशिष्टस्य घटाभावस्य योऽभावस्तदभावः पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्वरूपः विशिष्टञ्च शुद्धान्नातिरिच्यत इति

घटाभावस्वरूपोऽपीति पूर्वक्षणवृत्तित्वविशिष्टघटाभावश्च पूर्वक्षणावच्छेदेनैव पर्वतादौ वर्त्तत इत्यपरक्षणावच्छेदेन पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावात्मकप्रतियोग्यधिकरणत्वमपि तत्र वर्त्तत इत्येवमभावमात्रस्य प्रतियोगितावच्छेदकावच्छिन्नसामान्याधिकरणमेव हेत्वधिकरणमिति प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्तिरुद्भावयितुं न शक्यते साध्यतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य प्रविष्टत्वेन पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावादेः साध्यतावच्छेदकसंयोगेनाधिकरणाप्रसिद्ध्या घटत्वादिरूपप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावस्यैव वर्त्तव्यतया तस्य हेत्वधिकरणे सत्वात् एवं घटाभावाधिकरणकस्य वह्न्यभावस्य घटाभावस्वरूपत्वेन घटाभावस्य वह्नित्वमपि प्रतियोगितावच्छेदकमिति वन्हित्वात्मकप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वमेव हेत्वधिकरण इति प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाप्रसिद्ध्याऽव्याप्तिरपि नोपन्यासार्हा, अभावाधिकरणकस्याभावप्रतियोगिकस्यैवाभावस्याधिकरणस्वरूपत्वाभ्युपगमेन घटाभावे वन्ह्यभावस्य

घटाभावानात्मकत्वात् तथापि प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वनिवेशे धूमाभाववान्वन्ह्यभावादित्यादावव्याप्तिरुक्तदिशा भवत्येव सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिनः साध्यतावच्छेदकस्वरूपसम्बन्धेनानधिकरणत्वं हेत्वधिकरणस्येति । कपिसंयोगाभाववानात्मत्वादित्यादौ हेत्वाधिकरणे आत्मनि वर्त्तमानस्य कपिसंयोगाभावाभावस्य कपिसंयोगस्वरूपस्य गुणतया गुणसामान्याभावाभावरूपस्य प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदात्मकप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमात्मन इत्यव्याप्तिरनुद्धरैव यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वनिवेश इति प्रतियोगिताविशेषघटितलक्षणादरो युक्त एवेति ।

ननु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणहेत्वाधिकरणवृत्त्यभावप्रतियोगितासामान्य इत्यत्र सामान्यपदोपादानमनर्थकमिति अत्र प्रतिविधीयते तदनुपादाने धूमवान्वन्हेरित्यादौ प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तिघटाभावप्रतियोगितायां संयोगसम्बन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वादतिव्याप्तिः ।

तदुपादाने तु सामान्यपदस्य व्यापकत्वार्थतया तादृशप्रतियोगितात्वव्यापकत्वस्य निरुक्तोभयाभावे लाभेन धूमवान्वह्नेरित्यादौ तादृशप्रतियोगितात्वस्य धूमाभावीयप्रतियोगितायामपि सत्त्वेन तत्र निरुक्तोभयाभावस्यासत्त्वेन नातिव्याप्तिरिति ।

ननु सिसाधयिषा-विरहविशिष्टसिद्ध्यभावः पक्षतेत्यत्र सिद्ध्यभावः पक्षतेत्येव वाच्यमलंसिद्धौ सिसाधयिषा-विरहविशिष्टत्वस्योपादानेन, योग्यविभुविशेषगुणानां यौगपद्यनिषेधेन न सिद्धिसिसाधयिषा-परामर्शानां युगपदुत्पत्तिः सम्भवति किंतु क्रमेणैव, तन्न यदा पूर्वं सिसाधयिषा ततः परामर्शसिद्धी तदा सिद्धिकाले सिसाधयिषैव नास्तीति नानुमितिरिष्टा, यदा परामर्शसिसाधयिषा सिद्धयस्तदाऽपि सिद्धिनाशान्न सेष्टा, यदा तु सिद्धिपरामर्शसिसाधयिषाः तदा केवलाया अपि सिद्धेः परामर्शकालेऽभावादेवानुमितिर्निराबाधेति चेत्, अत्रेयं प्रतिक्रिया, यत्र वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति सिद्ध्यात्मकः प्रत्यक्षरूपः स्मरणरूपो वा परामर्शस्ततः सिसाधयिषा, तत्र परामर्शात्मिकायाः सिद्धेः सत्त्वेन सिद्ध्यभावस्याभावान्नानुमितेरुल्लासः स्यादतोऽनुमित्युत्पत्तये सिसाधयिषा-

विरहविशिष्टत्वं सिद्धौ विशेषणं देयम्, तथा चोक्तस्थले सिद्धिरूपविशेष्यस्य सत्त्वेऽपि सिसाधयिषाविरहरूपविशेषणाभावाद्विशिष्टाभावरूपपक्षतासम्पत्त्यानुमितिरिति

ननु सिद्ध्यात्मकपरामर्शसत्त्वे यत्किञ्चिज्ज्ञानं जायतामितीच्छायां नानुमितिः प्रत्यक्षाद्यतिरिक्तं ज्ञानं जायतामितीच्छायां त्वनुमितिरिति किं कृतो विशेषः सिसाधयिषा त्वस्योभयत्र सत्त्वेन सिसाधयिषा-विरहविशिष्टसिद्ध्यभावरूपपक्षताया उभयत्रैव सम्पत्तेरिति, अत्र ब्रूमः सिद्धौ सत्यां यादृशयादृशसिसाधयिषा सत्त्वे यल्लिंगकानुमितिस्तादृशतादृशसिसाधयिषाविरहकूटविशिष्टसिद्ध्यभावः पक्षता विषया तल्लिंगकानुमितौ हेतुः, एवञ्च यत्किञ्चिज्ज्ञानं जायतामितीच्छायामनुमित्यनुदयान्न तस्या उत्तेजकत्वं प्रत्यक्षाद्यतिरिक्तं ज्ञानं जायतामितीच्छायामनुमितेरुत्पादात्तस्या उत्तेजकत्वमित्येकस्याः पक्षताकुक्षिबहिर्भावोऽन्यस्यास्तदन्तर्भाव इति।

ननु पक्षतावच्छेदकसामानाधिकरण्येन सिद्धिसत्त्वे पक्षतावच्छेदकावच्छेदेनानुमितिर्भवति पक्षतावच्छेदकसमानाधिकरण्येनानुमितिर्न भवति पक्षतावच्छेदकावच्छेदेन सिद्धिसत्त्वे तु नोक्तानु-

मित्योरुल्लास इत्येतत्कथमुपपादनीयं, पक्षतावच्छेदकावच्छिन्नविशेष्यताकसाध्यतावच्छेदकावच्छिन्नप्रकारताकनिश्चयत्वरूपसाध्यसिद्धित्वस्योक्तासिद्धिद्वये पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितित्वस्योक्तानुमितिद्वये सत्वादिति अत्रेदमुत्तरम्—सिसाधयिषा—विरहविशिष्टसाध्यतावच्छेदकसम्बन्धावच्छिन्न-(साध्यतानिरूपितसंसर्गतावच्छेदकावच्छिन्नसंसर्गतानिरूपित) साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयत्वरूपोक्तसिद्धिद्वयसाधारणसिद्धित्वावच्छिन्नप्रतियोगिताभावः शुद्धसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्न-प्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न-विशेष्यताकानुमितित्वरूपसामानाधिकरण्येनानुमित्वावच्छिन्नम्प्रति हेतुः, सिसाधयिषा--विरहविशिष्टपक्षतावच्छेदकव्यापकसाध्यप्रतियोगिकसाध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्न--प्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयत्वरूपपक्षतावच्छेदकावच्छेदेन सिद्धित्वावच्छिन्नप्रतियोगिताकाभावः पक्षतावच्छेदकव्यापकाविधेयप्रतियोगिकसाध्यतावच्छेद-

कसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्न-विशेष्यताकानुमितित्वरूपावच्छेदकावच्छेदेनानुमितित्वावच्छिन्नम्प्रति हेतुरिति सर्वं चतुरस्रम् ।

ननु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वमिति हेत्वाभाससामान्यलक्षणे बाधभ्रमनादायातिव्याप्तिवारणाय यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेत्यर्थकत्वमुपदर्श्य पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वादित्युक्तिकरनेनातिव्याप्तिपरीहारं कृतवान् मुक्तावलीकारः, तत्र वन्ह्यभाववत्पर्वतस्याप्रसिद्धत्वेऽपि यादृशविशिष्टेत्यनेन वन्ह्यभाववत्त्वविशिष्टस्य पर्वतत्वविशिष्टस्य वोपादातुं शक्यत्वेन तद्विषयकत्वेन वन्ह्यभाववान्पर्वत इति बाधभ्रमस्यानुमितिविरोधित्वसंभवेनातिव्याप्तिस्तदवस्थैवेति शंका कथमुन्मूलनीयेति चेत्, अत्रेदं प्रतिविधानम्, उक्तलक्षणे ज्ञानस्येत्यत्र ज्ञानपदमनाहार्याप्रमाण्यज्ञानानास्कन्दितनिश्चयपरं षष्ठ्यर्थस्य वृत्तित्वस्य यद्विषयकत्वेऽन्वयः, एवञ्च यद्विषयकत्वेनेत्यस्य यादृशविशिष्टविषयकत्वेनेत्यर्थो यावन्नाश्रीयते तावत्तृतीयार्थोऽवच्छेदकत्वं स्वरूपसम्बन्धरूपमनतिरिक्तवृत्तित्वरूपं वाऽऽश्रयितुं न शक्यं, प्रथमे यद्विषय-

कत्वपर्याप्तावच्छेदकताया निवेशे सर्वत्रासम्भवः, वन्ह्यभाववद्ह्रदविषयकत्वे प्रतिबन्धकतावच्छेदकता-पर्याप्तेरभावात्, पर्याप्त्यनिवेशे तु बाधाद्यैकदेशेऽति-व्याप्तिः बाधादिघटकप्रत्येकवस्तुविषयताया अपि प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धारूपावच्छेदक-त्वात्, तदादाय च दुष्टत्वलक्षणस्य सद्धेतावप्यति-व्याप्तिः, द्वितीये वन्ह्यभावद्ह्रदादिविषयकत्वस्या-नुमित्यप्रतिबन्धके ह्रद इत्यादिज्ञानेऽपि सत्त्वेन सर्वत्र सम्भव एव स्यात्, यद्विषयकत्वस्य यादृशविशिष्ट-विषयकत्वपरतायान्तु तृतीयार्थोऽनतिरिक्तवृत्तित्वरूप-मवच्छेदकत्वमाश्रयितुं शक्यते तच्च स्वव्यापकत-त्कत्वं, तथा च, अनाहार्याप्रामाण्यज्ञानानास्कन्दि-तनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयताकत्व-व्यापकम्भवत्यनुमितिविरोधित्वं तद्रूपवत्त्वं दोषत्वं तद्रूपविशिष्टवत्त्वं दुष्टत्वमिति पर्यवस्यति तत्र च यद्रूपपदेन वन्ह्यभाववत्पर्वतत्वादिकमुपादातुं न शक्यं, तद्रूपविशिष्टस्य प्रसिद्धत्वेऽपि तद्रूपावच्छिन्न-विषयकत्वस्य वन्ह्यभावः पर्वत इत्यादि केवलवन्ह्य-

भावपर्वतादिविषयकज्ञानेऽपि सत्वेन तत्रानुमितिप्रतिबन्धकताया अभावात्, वन्ह्यभावविशिष्टपर्वतत्वादिकन्त्वप्रसिद्धत्वादेव न यद्रूपपदेनोपादातुं शक्यमिति नातिव्याप्तिरित्यत्रैव ग्रन्थकर्तुर्निर्भर इति ।

ननु साध्यव्यापकीभूताभावप्रतियोगीहेतुर्विरुद्ध इति पक्षे विरोधस्य साध्याभावग्रहसामग्रीत्वेनानुमितिप्रतिबन्धकतया हेत्वाभाससामान्यलक्षणाक्रान्तत्वमुपदर्शितं तत्कथं संगच्छते ह्रदो वह्निमाञ्जलादित्यत्र वह्निव्यापकीभूताभावप्रतियोगिजलमिति विरोधज्ञाने सत्यपि ह्रदो वह्न्यभाववानिति ज्ञानस्यानुत्पादात् वन्ह्यभावव्याप्यजलवान्ह्रद इति ज्ञानादेव तस्योत्पादादिति चेत् अत्र समादधति तार्किकाः हेत्वाभाससामान्यलक्षणे अनुमितिविरोधित्वपदेनानुमित्यप्रतिबन्धकत्वपक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वाभयाभाव एव विवक्षणीयः वन्हिव्यापकीभूताभावप्रतियोगिजलमितिविरोधनिश्चयस्य च जलवान्ह्रद इति निश्चयविशिष्टत्वस्य वन्ह्यभाववान् ह्रद इति साध्याभावग्रहसामग्रीत्वेनानुमितिविरोधित्वात्केवलस्य चानुमित्यप्रतिबन्धकत्वेऽपि पक्षधर्मिकहेतुमत्ताज्ञानकालीनत्वाभावादुक्तलक्षणसम्पत्तिरिति ।

ननु रत्नकोशकारः सौंकडोपाध्यायः सत्प्रतिपक्षस्थले संशयाकारामनुमितिमभ्युपगच्छति युक्तिश्च तेनेयमुपदर्श्यते, यथा घटाभावव्याप्यवत्ताज्ञाने सत्यपि चक्षुस्सन्निकर्षाद् घटवत्ताज्ञानं जायते यथा च शंखे पीतत्वाभावव्याप्यशंखत्ववत्ता ज्ञाने सत्यपि पीतादिदोषात्पीतः शंख इति ज्ञानम् एवं स्थाणुत्वाभावव्याप्यकरादिमानयं स्थाणुत्वव्याप्यशाखादिमानयमिति च ज्ञाने सत्यपि अयं स्थाणुर्न वेति संशयरूपः प्रत्यक्षो भवति तथा भवति तथा सत्प्रतिपक्षस्थले संशयाकारानुमितिः स्यादेवेति एवञ्च सत्प्रतिपक्ष-ज्ञानस्यानुमित्यप्रतिबन्धकत्वादुक्तलक्षणस्य तत्राऽव्याप्तिरिति पूर्वपक्षे अत्रेदं प्रतिविधानं तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुत्पत्त्या तदनुरोधेन तदुपनीतभानविशेषे तच्छाब्दबोधे च पृथक्प्रतिबन्धकत्वे गौरवात् लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताज्ञानत्वावच्छिन्नम्प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वमेव कल्पयितुमुचितमिति तद्वत्तानुमितेरप्युक्तप्रतिबध्यतावच्छेदकाक्रान्तत्वाद् भवति तत्प्रतिबन्धकत्वात् सत्प्रतिपक्षे हेत्वाभाससामान्यलक्षणसमन्वय इति ।

ननु यत्र पक्षे साध्याभावस्तत्र पक्षे यदि हेतुरस्ति तदा व्यभिचार एव दोषः, अथ नास्ति तदा स्वरूपासिद्धिरेव दोष इति तदन्यतरेणैव बाधितहेतोर्दुष्टत्वस्योपपत्तेर्दोषान्तरस्य बाधस्य कल्पनमनतिप्रयोजनम् अत एव विरुद्धासिद्धसन्दिग्धमलिंगं काश्यपोऽब्रवीदिति वचनं विरोधासिद्धिव्यभिचाराणां त्रयाणामेव दोषत्वप्रतिपादकं वैशेषिकाणां संगच्छत इति अत्र वदन्ति न्यायनिष्णाताः, बाधज्ञानस्यानुमितिप्रतिबन्धकं व्यभिचारस्वरूपासिद्धयोश्च परामर्शम्प्रति प्रतिबन्धकत्वमिति दूषकताबीजपार्थक्याद्बाधस्य न ताभ्यां गतार्थता, यत्र च परामर्शानन्तरं लौकिकसन्निकर्षेणो बाधज्ञानं तत्र परामर्शप्रतिबन्धफलकयोर्व्यभिचारस्वरूपासिद्धिज्ञानयोराकिञ्चित्करत्वादनुमितिप्रतिबन्धकत्वं बाधज्ञानस्यैव, उत्पत्तिक्षणावच्छिन्नो घटो गन्धवान्पृथिवीत्वादित्यादौ च न व्यभिचारो नापि स्वरूपासिद्धिरिति उत्पत्तिक्षणावच्छिन्ने घटे गन्धाभावरूपबाधस्य दोषत्वमवश्यमेषितव्यमिति ।

ननु केवलान्वयिसाध्यकत्वमनुपसंहारित्वमुक्तं तत्कथं, केवलान्वयिसाध्यकस्थलेऽपि अथवा हेतुमन्निष्ठेत्यादिलक्षणलक्षितायां व्याप्तेः सत्त्वेन तद्घटितपरामर्शतोऽनुमित्युत्पत्त्या तज्ज्ञानस्यानुमितितत्करणान्यतरप्रतिबन्धकत्वासम्भवादिति पूर्वपक्षः, अत्रेदमुत्तरम्, अन्वयव्याप्तिघटितपरामर्शवद्व्यतिरेकव्याप्तिघटितपरामर्शस्यापि लक्षणे प्रविष्टत्वेन साध्ये वृत्तिमदत्यन्ताभावाप्रतियोगित्वरूपानुपसंहारित्वज्ञाने साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिबुद्धेरनुपत्त्यापत्त्या भवति तत्प्रतिबन्धकत्वादुक्तानुपसंहारित्वस्य दोषत्वमिति ।

इति श्रीठाडीनिवासि—झोपनामकहरिशंकरशर्मविरचिता
सिद्धान्तमुक्तावल्या अनुमानखण्डस्य विवृतिः
॥ समाप्ता ॥

❀ श्रीः ❀

# संस्कृत छात्रों के लिये अमूल्य–

# ❀ परीक्षोपयोगी पुस्तकसूची ❀

| | |
|---|---|
| केवलफक्किकामर्मविवृति ... .... | १) |
| प्रथम भागसहित फक्किकामर्मविवृति ... | १॥) |
| केवल प्रथम भाग .... .... ... | ॥) |
| मुक्तावली ... .... .... ... | ॥) |
| शिशुतोषिणी ... ... ... | ॥।) |
| किरात ३ सर्ग .... ... .... | ॥) |
| रघुवंश ५ सर्ग .... ... .... | ॥=) |
| तर्कसंग्रह ... ... ... ... | ।–) |
| मेघदूत .... .... ... ... | ।=) |
| श्रुतबोध ... ... .... ... | ≡) |
| सदुपदेश उपन्यास .... .... ... | ॥) |
| काव्यप्रकाश नागेश्वरी–टीका–सहित छप रहा है | ५) |

पुस्तकें मिलने का पता—

## प० हरिशङ्कर झा विष्णु–विद्यालय

गंगापुर–बरेली U. P.